ॐ वसन्ताय नमस्तुभ्यं ग्रीष्माय च नमो नमः। वर्षाभ्यश्च शरत्संज्ञऋतवे च नमो नमः ।।
हेमन्ताय नमस्तुभ्यं नमस्ते शिशिराय च। माससंवत्सरेभ्यश्च दिवसेभ्यो नमो नमः ।।

कर्पूरदीपं दत्त्वा। ततोऽपसव्येनाऽर्घपात्रमुत्तानीकृत्य, सव्येन दक्षिणां दद्यात्। कुशतिलजलदक्षिणाद्रव्यमादाय, ॐ अद्येत्यादि अमुकगोत्रस्यास्मत्पितुरमुकशर्मणो वसुस्वरूपस्याद्यकृतैतत्सांवत्सरिकैकोद्दिष्टश्राद्धे पिण्डदान– प्रतिष्ठासिद्ध्यर्थं दक्षिणां रजतं चन्द्रदैवतं तन्मूल्योपकल्पितं द्रव्यं यथानाम– दैवतं यथानामगोत्राय यथानामशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे–विप्रकरे दद्यात्। पुनः कुशादिसहितं भूयसी–दक्षिणाद्रव्यमादाय,

संकल्प पढिलिनू। अनि ॐ उर्ज्जवहन्ती० मन्त्र पढेर तिल हालेको गाईको दूध दक्षिणतिर धारो लगाई पिण्डमा चढाइदिनू। अनि अपसव्य भएर 'ॐ पिण्डः सुसम्पन्नः' इत्यादि पढेर शिर निहुराई बास्ना लिएर पिण्ड टपरीमा उठाउनू। अनि वेदीमा बिछाएको कुश आगोमा हालिदिनू। पिण्डिकामा सात चार लेखिदिनू र जौले शंख चक्रको पूजा गरिदिनू। अनि पिण्डको टपरी उचालेर 'ॐ गयायां०' पढी टपरी वेदीमा राखिदिनू।

ॐ अद्येत्यादि अमुकगोत्रस्याऽस्मत्पितुरमुकशर्मणो वसुस्वरूपस्याऽद्यकृतैतत् सांवत्सरिकैकोद्दिष्टश्राद्धे न्यूनातिरिक्तपरिपूर्णार्थं यद्देयमन्नपानादिकं यथाद्रव्यं च यथायथानामदैवतं नानानामगोत्रेभ्यो नानानामशर्मभ्यो ब्राह्मणेभ्यो यथाभागं विभज्य दातुमहमुत्सृजे। ततोऽपसव्येन– ॐ अभिरम्यताम्, 'ॐ अभिरम्यता: स्म:' –प्रतिवचनान्ते ब्राह्मणस्य दक्षिणाङ्गुष्ठं गृहीत्वोत्थाप्य त्रिर्वारिधारया संवेष्ट्य विसर्जयेत् । ॐ आमावाजस्यप्रसवोजगम्यादेमेद्यावापृथिवीविश्वरूपे ॥ आमागन्ताम्पितरामातरा चामासोमोऽ– अमृतत्वेन गम्यात्। तत: सव्येन।

ॐ देवताभ्य: पितृभ्यश्च महायोगिभ्य एव च । नम: स्वाहायै स्वधायै नित्यमेव नमो नम:॥ त्रि:।[४६]

अपसव्येन दीपमाच्छाद्य, सव्यं कृत्वा हस्तौ पादौ प्रक्षाल्याऽऽचम्य 'ॐ यत्कृतं

४६. अब सव्य भएर कर्ताले सपरिवार वसन्त पूजा गरी कपूर बालिदिनू। अनि अपसव्य भएर अर्घपात्र उत्तानो पारिदिनू। अनि सव्य भएर दक्षिणा–संकल्प मूल अनुसार गरिदिनू। अनि भूयसी दक्षिणा पनि संकल्प गर्नू। अनि अपसव्य भएर 'ॐ अभिरम्यताम् ॐ अभिरम्यता: स्म:' भनेर कुशका ब्राह्मणलाई छोइदिनू र ॐ आमावाजस्य० मन्त्र पढिलिनू। अनि सव्य भएर ॐ देवताभ्य:० तीनपल्ट पढिलिनू।

तत्सुकृतमस्तु, यन्नकृतं तद्विष्णोः प्रसादाद् ब्राह्मणवचनात् सर्वं परिपूर्णमस्तु।

ॐ प्रमादात् कुर्वतां कर्म प्रच्यवेताऽध्वरेषु च । स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ।।

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च। प्रयच्छन्तु तथा राज्यं पितरः श्राद्धतर्पिताः ।।

ॐ कायेन वाचा मनसेन्द्रियैर्वा, बुद्ध्यात्मना वा प्रकृतिस्वभावात् ।
करोमि यद्यत् सकलं परस्मै, नारायणायेति समर्पये तत् ।।

इति भूमौ त्यजेत्। ततो बद्धाञ्जलिः पठेत्—

ॐ यस्य स्मृत्या च नामोक्त्या तपः श्राद्धक्रियादिषु। न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्।।

ॐ अच्युताय नमः, ॐ अच्युताय नमः, ॐ अच्युताय नमः।

ॐ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु।।

ब्राह्मणवचनात् सर्वं परिपूर्णमस्तु, 'अस्तु परिपूर्णम्'।।[४७]

।। इति एकोद्दिष्टश्राद्धविधिः।।

४७. अब अपसव्य भएर बत्ती ढाकिदिनू। सव्य भएर हात—पाउ धोई आचमन गरेर ॐ यत्कृतं० मन्त्र पढिलिनू। अनि हात जोरेर ॐ प्रमादात्० ॐ आयुः प्रजां० पढी ॐ कायेन वाचा० पढेर कर्मपत्रको कुश भूमिमा राखिदिनू। अनि हात जोरेर ॐ यस्य स्मृत्या० पढेर तीनपल्ट ॐ अच्युताय नमः ३ भन्नू। अनि कायेन वाचा० गरिदिनू। त्यसपछि ॐ चतुर्भिश्च० मन्त्र पढ्नुपर्दछ।

# पार्वणश्राद्धनियम:

श्राद्धनियम:— अक्षय्यासनयो: षष्ठी द्वितीयावाहने तथा ।
अन्नदाने चतुर्थी स्याच्छेषा: संबुद्धय: स्मृता: ॥

श्राद्धकाल:— आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं च मध्यत: ।
पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् ॥
गृहाग्निशिशुदेवानां ब्रह्मचारितपस्विनाम् ।
तावन्न दीयते किञ्चिद्यावत् पिण्डान्न निर्वपेत् ॥

हेमाद्रि:— रजस्वलां च पाखण्डां पुँश्चलीं पतितां तथा ।
त्यजेच्छूद्रां तथा वन्ध्यां विधवां चाऽन्यगोत्रजाम् ॥

पाकविचार:— न कदाचित् पचेदन्नमय:-स्थालीषु पैतृकम् ।
अयसो दर्शनादेव पितरो विद्रवन्ति हि ॥

*एवं शस्त्रादीन्यपि पितृसन्निधौ न स्थापयेत्—*

गोगजाश्वादिजुष्टेषु कृत्रिमायां तथा भुवि ।
न कुर्याच्छ्राद्धमेतेषु पारक्यादिषु भूमिषु ॥

वर्ज्यविप्राः— कितवो ब्रह्महा यक्ष्मी पशुपालो निराकृतिः ।
ग्राम-प्रेष्यो वार्धुषिको गायकः सर्वविक्रयी ॥

पुरूरवा माद्रवाश्च पार्वणे समुदाहृतौ । (येषामेतन्न ज्ञानं तैः)
आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ।
ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥

मनुः— सम्बन्धं प्रथमं ब्रूयाद् गोत्रं नाम तथैव च ।
पश्चाद् रूपं विजानीयात् क्रम एषः सनातनः ॥
सकारेण तु वक्तव्यं गोत्रे सर्वत्र धीमता ।
सकारः कुतपो ज्ञेयस्तस्माद्यत्नेन तं वदेत् ॥
अन्नाभावे द्विजाभावे यद्येको ब्राह्मणो भवेत् ।
पात्राण्यासादयेत् त्रीणि न तु ब्राह्मणसंख्यया ॥

छन्दोगा जुहुयुः सव्येनाऽपसव्येन याजुषः— इति वृद्धयाज्ञवल्क्यः।।

पिण्डपितृयज्ञबहुत्वे त्विति सामान्यातिदेशसत्वाच्चाऽपसव्येनैव कार्यम्, एतेन स्वाहा शब्दस्य देवकार्यप्रयुज्यमानस्य दर्शनात् सव्येनैवेति वदन्तः परास्ताः । होमस्य वह्निपत्नी शब्दोचारणेन विनाऽसंभवेन भवदुक्तस्य नरविषाणायमानत्वात्।।

परकीयगृहे यस्तु स्वान् पितॄन् तर्पयेद्यदि ।
तद्भुवः स्वामिनस्तस्य हरन्ति पितरो बलात् ।।
अग्रभागं ततस्तेभ्यो दद्यान्मूल्यं च जीवनम् ।
श्राद्धाऽर्हाणामग्रभागं शूद्राणां मूल्य—जीवने ।।
श्व—शृङ्गाल—खरैः स्पृष्टः पिण्डोभिन्नः प्रमादतः ।
कर्तुरायुष्यनाशाय प्रेतस्तं नोपसर्पति ।
तद्दोषपरिहारार्थं प्राजापत्यं प्रकल्पयेत् ।।

पृथ्वीचन्द्रोदयः— केतकीं तुलसीपत्रं बिल्वपत्रं च वर्जयेत् ।
द्रोणं च करवीरं च धत्तूरं किंशुकं तथा ।।

*यद्यपि तुलसी न प्राप्ता तथापि–*

पारिजातः– तुलसीगन्धमाघ्राय पितरस्तुष्टमानसाः ।
प्रयान्ति गरुडारूढास्तत्पदं चक्रपाणिनः ॥

पिण्डेषु निवेदनं भवति न ब्राह्मणार्चनेषु – इति विशेषः।

मध्याह्नं खड्गपात्रं च तथा नेपालकम्बलः ।
रौप्यं दर्भास्तिला गावो दौहित्रश्चाऽष्टमः स्मृतः ॥

पार्वणेऽपराह्णः– मात्स्यः अपराह्णो वै पितॄणाम्– शतपथश्रुतिः, एते श्राद्धे प्रशस्ताः॥

अथ पार्वणश्राद्धोपयोगी किञ्चिल्लिख्यते ।

भाद्रशुक्लपौर्णमास्यां प्रपितामहात् पराँस्त्रीनुद्दिश्य श्राद्धं कार्यम् ॥

नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ।
पौर्णिमान्तं प्रकर्तव्यं वाराहवचनं तथा ॥ हेमाद्रिः॥
पौर्णमासीषु सर्वासु निषिद्धं पिण्डपातनम् ।
वर्जयित्वा प्रौष्ठपदीं यथा दर्शस्तथैव सा ॥ गार्ग्यः॥

कन्यागते सवितरि यान्यहानि तु षोडश: ।
क्रतुभिस्तानि तुल्यानि देवो नारायणोऽब्रवीत् ।। ब्रह्माण्ड:।।
य: कन्यकान्वित: पक्ष: सोऽत्यन्तं पुण्यमुच्यते ।। कात्यायन:।।
मध्ये वा यदि वाप्यन्ते यत्र कन्यां व्रजेद्रवि: ।
स पक्ष: सकल: श्रेष्ठ: श्राद्धषोडशकं प्रति ।। वृद्धमनु:।।

षोडशदिनं श्राद्धकाल: पार्वणे।। षोडशत्वं भाद्रपूर्णिमया सहेत्येकपक्ष:, आश्विनकृष्णप्रतिपदेति द्वितीय:, तिथिवृद्ध्या तृतीया, नाऽऽद्य:। पूर्णिमायां प्रपितामहात्परानुद्दिश्य नान्दी–श्राद्ध–विधानेन तस्य पितृश्राद्धेनाङ्गत्वं नाऽन्त्योऽपि यत्र पक्षे द्वितिथ्योर्वृद्धिस्तत्र सप्तदशदिनप्रसङ्गेनैकस्मिन् श्राद्धे नाऽऽपत्ते:, न च प्रतिपदा षोडशत्वे तिथिवृद्धौ षोडशत्वहानि:। वृद्धेस्तस्मिन्नहन्येवाऽन्तर्भावात्। न च तद्भवत: संभवति तिथिवृद्ध्या षोडशत्वमिति व्याघातात्। अविशिष्यते द्वितीय: पक्ष:।।

अह्न: षोडशकं यत्तु शुक्लप्रतिपदा सह ।। इति देवलचचनात्।।
वृद्धमनु:– आषाढीमविधिं कृत्वा पञ्चमं पक्षमाश्रिता ।
काङ्क्षन्ति पितरं क्लिष्टा अन्नमप्यन्वहं जलम् ।।

अत एव पौर्णिमास्यां श्राद्धं न तदङ्गमिति पूर्वोक्तमपि संगतं भवतीति दिक्। विधवा पार्वणं ब्राह्मणद्वारा कुर्यात्।। विधवा कारयेच्छ्राद्धं यथाकालमतन्द्रितेति स्मृतिसङ्ग्रहात् स्वयं संकल्प्य, विधवा कारयेत् श्राद्धं पार्वणमिति प्रयोगपारिजातस्यार्थिकवचनाच्च महालयश्राद्धस्य षोडशदिने करणाऽसंभवे कार्तिकदर्शे कार्यम्।।

येयं दीपान्विता राजन् ख्याता पञ्चदशी तिथिः।
तस्यां दद्याददत्तं चेत् पितृभ्यो वै महालये ।। भविष्यः।।

तत्राऽ प्यसंभवे वृश्चिकसंक्रान्तेः प्रागेव कर्तव्यं प्रमाणमाकरे द्रष्टव्यम्।।

# पार्वणश्राद्धाऽनुक्रमणिका

भूदेवस्य निमन्त्रणं द्विजवरस्यार्घस्ततः स्वागतं,
प्रश्नश्चेति तदुत्तरं कुरु तथा सेकं प्रतिज्ञा जपः ।
दिग्बन्धासनके पितॄनथ पुनश्चाऽऽवाहयेद्दैवतं,
हस्तार्घस्तदधोमुखं कुरु पुनः पूजां ततो मण्डलम् ॥ १ ॥
प्रागग्नौकरणं धरापतिदतिः पात्रेऽवशेषं हवि–
स्त्वन्नानां परिवेषणं मधुजपो मध्वाज्यदानादनु ।
पात्रालम्भनमन्नदानमखिलं कृत्वाऽन्नहीनं जपे–
दापोविप्रकरे कुशोपरि विसन् मध्वादिकं संपठेत् ॥ २ ॥
दानं वैकरकं द्विराचमनता सावित्रिमन्त्रो मधु
त्वापो विप्रकरेषु पिण्डकरणे प्रश्नस्तथैवोत्तरम् ।

वेद्यङ्गारकशोधनं खलु तथा रेखावसेकस्ततो
दर्भाणां प्रकरं प्रसार्य च तथा सव्येन देवं जपेत् ॥ ३॥
पिण्डस्याऽऽसनतोऽथ पिण्डवपनं हस्तस्य संप्रोक्षणम्
प्राग्वच्चाऽऽचमनं विचिन्त्य च पितॄन् पिण्डावनेजो जलैः ।
नीव्या मोचनतोऽपसव्यभवनं कुर्याद्धरेः संस्मृतिः
सूत्रार्चाक्षततोऽथ चाऽन्नवपनादक्षय्यदानं ततः ॥ ४॥
सव्याऽघोरदतीवराथभवनं कुर्य्यात् स्वधा—वाचनं
चोर्जं पिण्डकुशोल्मुकामलकृतिः पात्रोत्थितिर्दक्षिणाम् ।
विप्राणां च विसर्जनं सुरजपो दीपः कराच्छादितः
कुर्य्यादाचमनं प्रमादपठनं श्राद्धस्य पूर्णः क्रमः ॥ ५॥[३४]

३४. अब पार्वण श्राद्धको निर्णयमा हारितः, हेमाद्रिः, मनुः, वृद्ध—याज्ञवल्क्य, पृथ्वीचन्द्रोदय, शतपथश्रुतिः, हेमाद्रिः, कात्यायानः, वृद्धमनुः, ब्रह्माण्डः, देवल र भविष्य पुराण आदिका अनेक वचनहरू दिइएका छन्। तिनको यथासम्भव पालन गर्नु आवश्यक छ। अनि पार्वण श्राद्धको अनुक्रमणिकाले पनि क्रम जान्न सकिन्छ॥

# अथ पार्वणश्राद्धविधिः

कर्ता शुचिराचान्तः पवित्रधारणं कृत्वा गोमयोपलिप्ते प्राङ्गणे दीपं प्रज्वाल्य संपूज्य–

नमोऽस्त्वनन्ताय सहस्रमूर्तये
सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते
सहस्र–कोटीयुगधारिणे नमः ॥

आचम्य प्राणानायम्य। प्रत्यङ्मुखः प्रथमं विश्वेदेवब्राह्मणौ निमन्त्रयेत्। स्ववामपाणिना विप्रदक्षिणजानु स्पृष्ट्वा स्वदक्षिणजानु च पातयित्वा स्वदक्षिणहस्तेनाऽ धोमुखेन ताम्बूलादिकं विप्रहस्ते दत्त्वा– ॐ अद्येत्यादि अमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाममुकाऽमुकाऽमुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनां विश्वेषां देवानां पुरूरवोमाद्रवोनाम्ना– मद्यकर्तव्यमहालयापरपक्षान्तर्गत अमुक पार्वणश्राद्धे अनेन ताम्बूलगन्धपुष्पाक्षतेन त्वं मया निमन्त्रितः। 'ॐ निमन्त्रितोऽस्मि'–प्रतिवचनम्।

पुनस्तत्सर्वं पूर्ववद् विधाय– ॐ अद्येहेत्यादि– अमुकगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमाता महानाममुकाऽमुकाऽमुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनां विश्वेषां देवानां पुरूरवोमाद्रवोनाम्नामद्यकर्त्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धेऽनेन ताम्बूलगन्धपुष्पाऽक्षतेन त्वं मया निमन्त्रितः। 'ॐ निमन्त्रितोऽस्मि'–प्रतिवचनम्।।[३५]

अथ पितृविप्रनिमन्त्रणम्– अपसव्यं कृत्वा दक्षिणाऽभिमुखो भूत्वा स्ववामजानु पातयित्वा वामहस्तेन उदङ्मुखस्य पितृब्राह्मणस्य वाम जानु स्पृष्ट्वा उत्तानेन स्वदक्षिणकरेण ताम्बूलादि विप्रहस्ते दत्त्वा 'ॐ अद्येत्यादि अमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाममुकाऽमुकाऽमुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणामद्यकर्तव्यमहालयाऽपरपक्षान्तर्गतपार्वणश्राद्धे अनेन ताम्बूल–गन्धपुष्पाक्षतेन त्वं मया निमन्त्रितः।। 'ॐ निमन्त्रितोऽस्मि' इति प्रतिवचनम्। पुनः पूर्ववत्–

३५. अब श्राद्धकर्ताले नित्य कर्म सकेर पवित्र धारण गरी आसनमा बसी पहिले 'ॐ नमोस्त्वनन्ताय०' पढेर बत्ती बाल्नू र पूजा गरिलिनू। अनि आचमन र प्राणायाम गरेर प्रथम विश्वेदेव ब्राह्मणलाई निमन्त्रण गर्दा आफ्नू बायाँ हातले ब्राह्मणको घुँडा छोएर आफ्नू दाहिने घुँडा मारी दाहिने हातले पान–सुपारी, जनै लिएर संकल्प गर्नू। यसमा पितृ–पितामह–प्रपितामह तथा मातामह, प्रमातामह र वृद्धप्रमातामहलाई भिन्नाभिन्नै संकल्प गरे उत्तम हुनेछ। मूलमा पनि भिन्नाभिन्नै छ।।

'ॐ अद्येत्यादि अमुकगोत्राणामस्मन्मातामह—प्रमातामह—वृद्धप्रमातामहानाममुकाऽमुकाऽमुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणामद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे अनेन ताम्बूल—गन्धपुष्पाक्षतेन त्वं मया निमन्त्रितः।। 'ॐ निमन्त्रितोऽस्मि' प्रतिवचनम्।।[३६]

ॐ अक्रोधनैः शौचपरैः सततं ब्रह्मवादिभिः ।
भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा ।।
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ।
भवितव्यं भवद्भिर्नोऽद्यतने श्राद्धकर्मणि ।।

'ॐ भवितव्यम्' इति प्रतिवचनम् ।

ततः सव्येन विश्वेदेवब्राह्मणयोश्चरणान् प्रक्षालयेत्—

ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये, सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते, सहस्रकोटीयुगधारिणे नमः ।।

३६. पितृब्राह्मणको निमन्त्रणमा पनि क्रम उही हो, तर अपसव्य भएर दक्षिणतर्फ फर्की बायाँ घुँडा मोरेर बायाँ हातले ब्राह्मणको घुँडा छोएर संकल्प गर्नू, तर दुवै संकल्प मूल—अनुसार अलग—अलग गर्नुपर्दछ।।

ॐ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥

पाद्यपात्रं वामहस्ते कृत्वा– ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये। शंय्योरभिस्रवन्तु नः। कुशादिकमादाय– ॐ अद्याऽमुकगोत्राणामस्मत्पितृ–पितामह–प्रपितामहानाममुकाऽमुकाऽमुकशर्मणां– सपत्नीकानां वसुरुद्राऽऽदित्यस्वरूपाणामद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे श्राद्धसम्बन्धिनो विश्वेदेवाः पुरूरवोमाद्रवो नामानः एष पादार्घो वः स्वाहा॥ पुनः पूर्ववत् कृत्वा कुशादिकमादाय– 'ॐ अद्याऽमुकगोत्राणामस्मन्मातामह–प्रमातामह–वृद्धप्रमातामहानाममुकाऽमुकाऽमुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणामद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे श्राद्धसम्बन्धिनो विश्वेदेवाः पुरूरवो माद्रवो नामानः एष पादार्घो वः स्वाहा॥[३७]

३७. अब 'ॐ अक्रोधनै०' मन्त्र पढेर 'भवितव्यम्' भन्नू। अनि सव्य भएर विश्वेदेवको पाउ पखाल्नू– 'ॐ नमोऽस्त्वनन्ताय०' तथा 'ॐ नमो ब्रह्मण्य०' मन्त्र पढी दुनो हातमा उठाउनू र 'ॐ शन्नोदेवी०' मन्त्र पढेर कुश लिई संकल्प गर्दा दुवै ब्राह्मणको अलग–अलग गर्नू॥

*ततोऽपसव्येन पितृब्राह्मणयोश्चरणान् प्रक्षालयेत्*–

ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये, सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते, सहस्रकोटी–युगधारिणे नमः ॥
यत्फलं कपिलादाने कार्त्तिक्यां ज्येष्ठपुष्करे ।
तत्फलं पाण्डवश्रेष्ठ ! विप्राणां पादशौचने ॥

पाद्यपात्रं वामहस्ते कृत्वा– ॐ शन्नोदेवीरभिष्टयऽआपो भवन्तु पीतये। शंय्योरभिस्रवन्तु नः॥ मोटकमादाय– 'ॐ अद्याऽमुकगोत्राः, अस्मत्पितृपितामहप्रपितामहाः, अमुकाऽमुकाऽमुकशर्माणः सपत्नीकाः वसुरुद्रादित्यस्वरूपाः अद्यकर्तव्यमहालयाऽपरपक्षान्तर्गतपार्वणश्राद्धे एष पादार्घस्त्रेधा विभज्य युष्मभ्यं स्वधा॥ पुनः पूर्ववत् कृत्वा मोटकमादाय– ॐ अद्याऽमुकगोत्राः, अस्मन्माता–महप्रमातामहवृद्धप्रमातामहाः अमुकाऽमुकाऽमुकशर्माणः सपत्नीकाः वसुरुद्रादित्यस्वरूपाः, अद्यकर्तव्य–महालयाऽपरपक्षान्तर्गतपार्वणश्राद्धे एष पादार्घस्त्रेधा विभज्य युष्मभ्यं स्वधा॥[३८]

३८. अनि अपसव्य भएर पितृ–ब्राह्मणको पाउ धुन दुनामा जलादि राख्नू र 'ॐ नमोऽस्त्वनन्ताय०' 'यत्फलं कपिला०' र 'यावद्घनघ्वह्नि०' इत्यादि मन्त्रहरू पढी दुनो बायाँ हातमा लिएर 'ॐ शन्नोदेवी०' मन्त्र पढ्दै जल छर्किदिनू। अनि मोटक लिएर मूल–अनुसार दुई संकल्प गर्नुपर्दछ॥

ततः सव्येनाऽऽचम्य गृहं प्रवेशयेत्। 'ॐ आगता यूयम्' 'ॐ सुस्वागता वयम्।' 'ॐ इदमासनमास्यताम्' 'ॐ आसे'–इति प्रतिवचनम्। ॐ भूर्भुवः स्वः विश्वेदेवब्राह्मणौ पूर्वाभिमुखौ उपवेशयेत्। ततोऽपसव्येन– 'ॐ आगता यूयम्' 'ॐ सुस्वागता वयम्' 'ॐ इदमासनमास्यताम्' 'ॐ आसे'– इति प्रतिवचनम्। ॐ भूर्भुवः स्वः पितृब्राह्मणौ उदङ्मुखौ उपवेशयेत्। सर्वत्र प्रश्नेषु पंक्तिमूर्धन्यं पृच्छेत् ॥

देवकर्मपात्रम् सव्येन – 'ॐ कर्मपात्रमहं करिष्ये' 'ॐ कुरुष्व' इति अनुज्ञातः सन्, देवकर्मपात्रं कुर्यात्– 'ॐ यद्देवादेवहेडनन्देवासश्चकृमाव्वयम्। अग्निर्म्मा तस्मादेनसो विश्वान्मुञ्चत्व ꣳहसः॥ यदि दिवा यदि नक्तमेना ꣳ सिच कृमाव्वयम्। व्वायुर्मातस्मादेनसो व्विश्वान्मुञ्चत्वꣳ हसः॥ यदि जाग्रद्यदिस्वप्नमेना ꣳ सिचकृमाव्वयम्। सूर्य्योमातस्मादेनसोव्विश्वान्मुञ्चत्वꣳ हसः॥

पवित्रं क्षिपेत्– पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण सूर्य्यस्य रश्मिभिः। तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्॥ जलम्– शन्नोदेवी रभिष्टयऽआपो– भवन्तु पीतये। शंय्योरभिस्रवन्तु नः॥ चन्दनम्– गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥ यवान्–यवोसि यवयास्मद्द्वेषो यवयारातीः॥ पुष्पम्–

श्रीश्चते लक्ष्मीश्चपत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण ॥[३९]

पितृकर्मपात्रम् अपसव्येन— 'ॐ कर्मपात्रमहं करिष्ये।' 'ॐ कुरुष्व' इति अनुज्ञातः सन्— यद्देवादेवहेडनन्देवासश्चकृमाव्वयम्। अग्निर्मातस्मादेनसोविश्वान्मुञ्चत्व ꣳ हसः। यदि दिवा यदि नक्तमेना ꣳ सिचकृमाव्वयम्। व्वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳ हसः। यदि जाग्रद्यदि स्वप्नेनाꣳसि च कृमाव्वयम् । सूर्य्योमातस्मादेनसोव्विश्वान्मुञ्चत्वꣳ हसः॥ पवित्रं क्षिपेत्—पवित्रेस्त्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यछिद्रेण सूर्य्यस्य रश्मिभिः। तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुनेतच्छकेयम्॥ जलम्—शन्नोदेवीरभीष्टयऽआपोभवन्तुपीतये। शंय्योरभिस्रवन्तु नः॥ चन्दनम्-गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥

३९. अनि सव्य भएर आचमन गरी विश्वेदेव ब्राह्मणसित प्रश्नोत्तर गरी पूर्वतिर फर्काएर बसाल्नू। अनि अपसव्य भएर पितृ—ब्राह्मणसित पनि प्रश्नोत्तर गरी आफूतिर फर्काएर बसाल्नू। अनि सव्य भएर विश्वेदेवतिर प्रश्न गरी कर्मपात्र बनाउनू। त्यसका सबै मन्त्रहरू मूल—अनुसार पढ्दै जल, पवित्र तथा चन्दन, फूल र जौ हाल्नू॥

तिलान्—तिलोसिसोमदैवत्यो गोसवोदेवनिर्मितः। प्रत्नमद्भिः पृक्तः स्वधयापितॄन्लोकान् पृणाहि नः स्वाहा।। पुष्पम्—श्रीश्चते लक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण।। ततः सव्येन कुशत्रयसहितं कर्मपात्रोदकमादाय —

ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं स बाह्याऽभ्यन्तरः शुचिः ।।

ॐ पुण्डरीकाक्षः पुनातु।। श्राद्धदेशे द्रव्याण्यात्मानं पाकं च सिञ्चेत्।।

पार्वणश्राद्धसंकल्पः—तत्कुशादिकमादाय—अद्येत्यादि अमुकगोत्राणामस्मत्पितृ—पितामह—प्रपितामहानाममुकाऽमुकाऽमुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां तथा अमुकगोत्राणामस्मन्मातामह—प्रमातामह—वृद्धप्रमातामहानाममुकाऽमुकाऽमुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां पुरूरवोमाद्रवो नाम्नां विश्वेदेवपूर्वकाणामद्यकर्त्तव्यमहालया—ऽपरपक्षान्तर्गतपार्वणश्राद्धमेभिर्द्रव्यैरहं करिष्ये।।[४०]

---

४०. अब अपसव्य भएर पितृ—ब्राह्मणसित प्रश्न गरी कर्मपात्र बनाउनू। त्यसमा जल, चन्दन, अक्षता, तिल,पवित्र, फूल—कुश हाल्नुपर्दछ। त्यसपछि सव्य भएर देव—कर्मपात्रको कुश लिएर आफूलाई र सामग्री समेत सबैतिर— 'ॐ अपवित्रः०' भनेर जल छर्किई त्यही कुशले संकल्प गरिलिनू।।

ततः —

ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव ननो नमः।। त्रिः।

ॐ सप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ। चक्रवाकाः सरद्वीपे हंसाः सरसि मानसे ।।
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः । प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ ।।
ये विप्रमुख्याः कुरुजाङ्गलेषु, जातास्तथा दासकुले मृगाश्च ।
कालञ्जरे सप्त च चक्रवाका, ये मानसे ते वयमत्र सिद्धाः ।।
पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः । यत्र यत्र स्मरेद् विद्वान् पितॄणां दत्तमक्षयम् ।।
श्राद्धभूमौ गयां ध्यात्वा तथा देवं गदाधरम् । उभाभ्यां च नमस्कृत्य ततः श्राद्धं समारभेत् ।।
गयागयो गयादित्यो गायत्री च गदाधरः। गया गयासुरश्चैव षड् गया मुक्तिदायकाः ।।
ईशानविष्णुकमलासनकार्तिकेय, वह्नित्रयार्करजनीशगणेश्वराणाम् ।
क्रौञ्चामरेन्द्रकलशोद्भवकश्यपानां, पादान् नमामि सततं पितृमुक्तिहेतोः ।।

ॐ गयायै नमः। ॐ गदाधराय नमः।।[४१]

४१. अनि 'ॐ देवताभ्यः०' तीनपल्ट पढ्नू र ॐ सप्तव्याधा० देखि ॐ गदाधराय नमः सम्म पुरोहितले वा स्वयं कर्ताले पढे पनि हुन्छ।

दिग्बन्धनम्– अपसव्येन तिलसहितमोटकमादाय तिलान् पूर्वादिक्रमेण वक्ष्यमाणमन्त्रैर्विकिरेत्। ॐ अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम्। अपहताऽअसुरा रक्षाᳬं सि व्वेदिषदः। ॐ तथा बर्हिषदः पान्तु याम्यां, ये पितरः स्थिताः अपहताऽअसुरा रक्षाᳬं सि व्वेदिषदः। ॐ प्रतीचीमाज्यपास्तद्वत्। अपहताऽअसुरा रक्षाᳬं सि व्वेदिषदः।। ॐ उदीचीमपि सोमपाः, अपहताऽअसुरा रक्षाᳬं सि व्वेदिषदः।।

ॐ उद्ध्र्वतस्त्वर्यमा रक्षेत् कव्यवाडनलोऽप्यधः । रक्षोभूतपिशाचेभ्यस्तथैवाऽसुरदोषतः।।
सर्वतश्चाऽधिपस्तेषां यमो रक्षां करोतु मे
निहन्मि सर्वं यदमेध्यवद्भवेद्, हताश्च सर्वेऽसुरदानवा मया ।
रक्षांसि यक्षाः सपिशाचगुह्यका, हता मया यातुधानाश्च सर्वे ।।

मोटकं सपुष्पं वामकट्यां धारयेत् । तिलसहितकुशखण्डत्रयं गृहीत्वा–
ॐ प्रयान्तु दूरतः सर्वे दैत्येया दानवास्तथा। सर्वविघ्नोपशान्त्यर्थं क्षिपामि च कुशान् तिलान्।।

दक्षिणस्यां क्षिपेत्।[४२]

ततः—सव्येन—

ॐ नमो नमस्ते गोविन्द पुराण—पुरुषोत्तम । इदं श्राद्धं हृषीकेश रक्षतात् सर्वतो दिशः ।।

आसनम्। सव्येनैव कुशमादाय—अद्याऽमुकगोत्राणामस्मत्पितृ—पितामह—प्रपितामहा—नाममुकामुकामुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनां विश्वेषां देवानां पुरूरवोमाद्रवोनाम्नामिदं कौशमासनं वः स्वाहा। पुनः कुशमादाय, ॐ अद्याऽमुक—गोत्राणामस्मन्मातामह—प्रमातामह—वृद्धप्रमातामहानाममुकामुकामुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनां विश्वेषां देवानां पुरूरवो माद्रवो नाम्नामिदं कौशमासनं

४२. अब दिग्बन्धनमा तिल सहित मोटक लिएर पूर्वादिक्रमले मन्त्र अनुसार तिल छर्कनू ॐ ऊर्ध्व—तस्त्वर्यमा० ले मास्तिर तथा भूमिमा पनि छर्केर मोटक र फूल बायाँ कम्मरमा घुसारी 'ॐ निहन्मि सर्वम्०' मन्त्र पढ्नुपर्दछ। जनि तीन टुक्रा कुश तिलमा चोभेर दक्षिणतिर फालिदिनू र ॐ प्रयान्तु दूरतः० यो मन्त्र पढिलिनू।

वः स्वाहा।। देवब्राह्मणाय कुशरूपमासनं दद्यात्।[४३]

ततोऽपसव्यं कृत्वा मोटकमादाय। – ॐ अद्याऽमुकगोत्राणामस्मत्पितृ–पितामह–प्रपितामहानाममुकामुकामुकशर्मणाम् सपत्नीकानां वसुरुद्रादित्यस्वरूपाणामद्यकर्तव्य–महालयाऽपरपक्षान्तर्गतपार्वणश्राद्धे इदं मोटकरूपमासनं त्रेधा विभज्य युष्मभ्यं स्वधा। पुनर्मोटकमादाय, ॐ अद्यामुकगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुका–मुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणामद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे इदं मोटकरूपमासनं त्रेधा विभज्य युष्मभ्यं स्वधा।[४४]

---

४३. अनि सव्य भएर ॐ नमो नमस्ते० पढी नमस्कार गर्नू। अनि सव्यले नै विश्वेदेवको आसन पितृ–पितामह–प्रपितामाह र मातामह–प्रमातामह–वृद्धप्रमातामहलाई भिन्नाभिन्नै दिनुपर्दछ। संकल्प मूल अनुसार गर्नू।

४४. अब अपसव्य भएर पितृ–ब्राह्मणलाई पनि माथिकै अनुसार मोटकको आसन दिनुपर्दछ।

ततः सव्येन, अञ्जलिं बद्ध्वा विश्वेदेवानावाहयेत् — ॐ अद्यामुकगोत्राणा–मस्मत्पितृ–पितामह–प्रपितामहानाममुकामुकामुकशर्मणां सपत्नीकानां–वसुरुद्रादित्यस्वरूपाणां तथा अमुकगोत्राणामस्मन्मातामह–प्रमातामह–वृद्धप्रमातामहानाममुकामुकामुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणामद्य कर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे श्राद्धसम्बन्धिनो विश्वान् देवान् पुरूरवो माद्रवो नाम्नः आवाहयिष्ये। 'ॐ आवाहय' प्रतिवचनम्। ॐ विश्वेदेवासऽआगतश्रृणुतामऽइमꣳ हवम्। एदं बर्हिर्निषीदत।। आवाह्य। ॐ यवोसि यवयास्मद्द्वेषो यवयारातीः।। श्राद्धदेशे यवान् विकीर्य। ॐ विश्वेदेवाः शृणुतेमꣳ हवम्मेयेऽ अन्तरिक्षे यऽउपद्यविष्ठ। येऽअग्निजिह्वाऽउत वा यजत्राऽआसद्यास्मिन् बर्हिषिमादयध्वम्।।

ॐ आगच्छन्तु महाभागा विश्वेदेवा महाबलाः। ये अत्र विहिताः श्राद्धे सावधाना भवन्तु ते।[४५]

४५. अब सव्य भएर हात जोरी आवाहनको संकल्प पढ्नू र ॐ विश्वेदेवासऽआगत० र 'ॐ यवोसि०' यी दुई मन्त्र र ॐ आगच्छन्तु० पनि पढिलिनुपर्दछ।

ततोऽपसव्येनाञ्जलिं बध्वा पितॄनावहयेत्– ॐ अद्यामुकगोत्रानस्मत्पितृ–पितामह–प्रपितामहान्– अमुकामुकामुकशर्मणः सपत्नीकान् वसुरुद्रादित्यस्वरूपान् तथा अमुकगोत्रान् अस्मन्मातामह– प्रमातामह–वृद्धप्रमातामहान् अमुकामुकामुकशर्मणः सपत्नीकान् वसुरुद्रादित्यस्वरूपान् अद्य कर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे आवाहयिष्ये। 'ॐआवाहय'–प्रतिवचनम्। ॐ उशन्तस्त्वानिधिमह्युशन्तः समिधीमहि। उशन्नु–शतऽआवहपितॄन् हविषेऽअत्तवे। आवाह्य, ॐ अपहताऽअसुरा रक्षाᳫं सि व्वेदिषदः। श्राद्धदेशे तिलान् विकीर्य। ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः। अस्मिन् यज्ञे स्वधया मदन्तोधिब्रुवन्तु ते वन्त्वस्मान्।[४६]

हस्तार्घपात्रम्–सव्येन विश्वेदेवब्राह्मणौ पृच्छेत्। ॐ हस्तार्घपात्रमहं करिष्ये। ॐ कुरुष्व–अनुज्ञातः सन् पुटकद्वयमग्रे कृत्वा, ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्व्वःप्रसवऽउत्पु–

४६. अब अपसव्य भएर हात जोरी पितृको आवाहन गर्नुपर्दछ। अनि ॐ उशन्तस्त्वा० मन्त्र पढेर श्राद्धस्थानमा तिल छर्नू र ॐ आयन्तु नः० मन्त्र पढिलिनू।

नाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः।। पूर्वाग्रं पवित्रद्वयं पुटकद्वये धारयेत्। जलम्—ॐ शन्नोदेवीरभीष्टयऽआपो भवन्तु पीतये। शंय्योरभिस्रवन्तु नः।। यवान्—यवोसि यवयास्मद्द्वेषोयवयारातीः। पुष्पम्—श्रीश्चते लक्ष्मीश्चपत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण।। गन्धम् —

ॐ गन्धद्वारां दुराधर्षाम् नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ।।

गन्धं क्षिपेत्। ॐ हस्तार्घपात्रं संपन्नम्—देवब्राह्मणं पृच्छेत्। ॐ सुसंपन्नम्—तेनोक्ते, 'ॐ हस्तार्घपात्रमुत्थापयामि' 'ॐ उत्थापयस्व' वचनानन्तरम्; हस्तार्घपात्रं वामहस्ते कृत्वा 'ॐ नमो नारायणाय' पुष्पसहितं पूर्वाग्रं पवित्रं विप्रकरे धृत्वा, अधोमुखेन दक्षिणकरेण वामकरस्थपुटकमुखं पिधाय 'ॐ या दिव्याऽआपः पयसासम्बभूवुर्याऽअन्तरिक्षाऽउतपार्थवीर्याः। हिरण्यवर्णा यज्ञियास्स्तानऽआपः शिवासꣳ स्योना सुहबा भवन्तु। अर्घपात्रस्थजलमभिमन्त्र्य कुशयवजलान्यादाय, ॐअद्यामुकगोत्राणामस्मत्पितृ—पितामह-प्रपितामहानाममुकामुकामुकशर्मणां

सपत्नीकानां वसुरुद्रादित्यस्वरूपाणामद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे श्राद्धसम्बन्धिनो विश्वदेवाः पुरूरवो माद्रवो नामानः एषः हस्तार्घो वः स्वाहा । देव–ब्राह्मणकरे अर्घं दद्यात्। 'अर्घे पुनः प्रत्यर्घमस्तु' पुटकस्थ–किञ्चिज्जलं विप्रकरे दत्त्वा पवित्रसहितं तदर्घपात्रं भूमौ धृत्वा अपरार्घपात्रं वामहस्ते कृत्वा, सर्वं पूर्ववदेव विधाय यवजलकुशानादाय– ॐ अद्यामुकगोत्राणामस्मन्मातामह–प्रमातामह–वृद्धप्रमाता–महानाममुकामुकामुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणामद्यकर्तव्य–महालयापरपक्षान्तर्गतपार्वणश्राद्धे श्राद्धसम्बन्धिनो विश्वेदेवाः पुरूरवो माद्रवो नामानः एष हस्तार्घो वः स्वाहा। देवब्राह्मणकरे अर्घं दद्यात्। 'अर्घे पुनः प्रत्यर्घमस्तु' पूर्ववत्तदर्घपात्रमपि भूमौ धृत्वा। ततः अर्घपात्रद्वयस्थजलेन– ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतञ्जीवेम शरदः शतꣳ शृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात्॥ चक्षुःस्पर्शः। तदनन्तरं पवित्रसहिते देवार्घपात्रे–

'ॐ विश्वेभ्यो देवेभ्यः स्थानमसि' वाक्येनस्वस्वविश्वेदेवदक्षिणपार्श्वे उत्ताने स्थापयेत्।[४७]

ततोऽपसव्येन 'हस्तार्घपात्राण्यहं करिष्ये' पितृब्राह्मणं पृच्छेत्। 'ॐ कुरुष्व' अनुज्ञातः सन् पित्रादिमाताहाद्यर्घपात्रार्थं स्वाग्रमेकमेकं पुटकं संस्थाप्य तयोः पुटकयोर्दक्षिणे द्वौ द्वौ पुटकौ निधाय तेषु पुटकेषु षट्सु– ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुना– म्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः। उत्तराग्राणि पवित्राणि धारयेत्। ॐ शन्नोदेवीरभीष्टयऽआपो भवन्तु पीतये। शंय्योरभिस्रवन्तु नः।। जलं क्षिपेत्।

४७. अब सव्य भएर विश्वेदेव ब्राह्मणलाई हस्तार्घ गर्ने प्रश्नोत्तर गर्नू र विश्वेदेवको अगाडि दुइटा दुना राखी त्यसमा मूलको मन्त्र अनुसार पवित्र, जल, जौ, फूल र चन्दन राख्नू। अनि ब्राह्मणसित प्रश्नोत्तर गरी अर्घपात्र बायाँ हातमा लिनू र 'ॐ नमो नारायणाय' भनी फूल पवित्र ब्राह्मणमा राखिदिनू। अनि दाहिने हातले बायाँ हातको दुना छोप्दा 'ॐ या दिव्या०' मन्त्र पढी कुश र जौ जल लिई संकल्प गर्नू। यही क्रमले अर्को संकल्प पनि गर्नुपर्दछ। अनि दुवै दुनाको जलले आँखा स्पर्श गर्नू र ॐ विश्वेभ्यो० पढेर दुना ब्राह्मणको दाहिनेतिर उत्तानै राखिदिनू।

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्।। चन्दनं क्षिपेत्। ॐ तिलोऽसिसोमदैवत्यो गोसवोदेवनिर्मितः। प्रत्न मद्भिः पृक्तः स्वधया पितॄँल्लोकान्पृणाहि नः स्वाहा—तिलान् क्षिपेत्। ॐ श्रीश्चते लक्ष्मीश्चपत्क्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणा मुम्मऽइषाण सर्वलोकम्मऽइषाण।। पुष्पाणि क्षिपेत्।। — 'ॐ हस्तार्घपात्राणि संपन्नानि' पितृब्राह्मणं पृच्छेत्। 'ॐ अस्तार्घपात्राणि सुसंपन्नानि' तेनोक्ते 'ॐ हस्तार्घपात्रमुत्थापयामि' 'ॐ उत्थापयस्व' वचनानन्तरम् प्रथमपित्रर्घपात्रं वामहस्ते कृत्वा, 'ॐ नमो नारायणाय' सपुष्पं पवित्रं पितृतीर्थेन विप्रकरे धृत्वा वामकरस्थहस्तार्घपात्रमुत्तान—दक्षिणकरेण पिधाय— ॐ या दिव्याऽआपः पयसा सम्बभूवुर्याऽअन्तरिक्षाऽउतपार्थवीर्याः। हिरण्यवर्णा यज्ञियास्तानऽआपः शिवाः स ꣳस्योनासुहवा भवन्तु। अर्घपात्रस्थजलमभिमन्त्र्य तिलजलमोटकमादाय— ॐ अद्याऽमुकगो—त्राऽस्मत्पितरमुकशर्मन् सपत्नीक वसुस्वरूपाऽद्यकर्तव्यमहालयाऽपरपक्षान्तर्गतपार्वणश्राद्धे एष हस्तार्घस्ते स्वधा।। ब्राह्मणकरे दद्यात्। 'ॐ अर्घे पुनः प्रत्यर्घमस्तु' पुटकस्थं

किञ्चिज्जलं विप्रकरे दद्यात्। पुष्पपवित्रसहितं तदर्घपात्रं भूमौ धृत्वा एवं यथाक्रमेण पितामहादिभ्यः पञ्चभ्यो दद्यात्।[४८]

ततः प्रपितामहार्घपात्रस्थजलादिकं पितामहार्घपात्रे कृत्वा तत्सर्वं पित्रर्घपात्रे कृत्वा पित्रर्घपात्रमुत्तानं पितामहार्घपात्रोपरि धृत्वा तदुभयपात्रमुत्तानं प्रपितामहार्घपात्रोपरि धृत्वा एवं मातामहार्घपात्राणि अपि कृत्वा सव्येन तत्रस्थजलेन– ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतञ्जीवेम शरदः शतꣳशृणुयाम शरदः शतम्प्रब्रवाम

४८. अब अपसव्य भएर हस्तार्घ पात्र गर्ने प्रश्नोत्तर गरी दुवै ब्राह्मणको अगाडि आफूतिरबाट तीन–तीन दुना राख्नू र त्यसमा मूल अनुसार मन्त्र पढ्दै पवित्र, जल, चन्दन, तिल र फूल राखी ब्राह्मणलाई सोधेर पहिलो पितृको अर्घपात्र बायाँ हातमा लिनू र 'ॐ नमो नारायणाय' पढी दुनाको फूल पवित्र पितृतीर्थले ब्राह्मणमा राख्नू अनि बायाँ हातको अर्घपात्रलाई उत्तानो दाहिने हातले ढाक्नू र ॐ या दिव्या० मन्त्र पढ्नू। अनि मोटक र जल लिएर संकल्प गर्नू, अनि ब्राह्मणमा राखेको फूल पवित्र फेरि दुनामै राखी त्यो दुना भूमिमा राखेर अर्को दुना लिई पहिले–जस्तै सबै कार्य गरेर संकल्प गर्नू। यसै गरी सबैलाई भिन्न–भिन्न गर्नुपर्दछ।

शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात्।। चक्षुःस्पर्शः कार्यः । ततोऽपसव्येन एकत्रकृतं पित्रर्घपात्रं गृहीत्वा पितृद्विजस्याऽऽसनवामभागे– 'ॐ पितृभ्यः स्थानमसि' न्युब्जं कुर्यात्, तदुपरि कुशत्रयं दद्यात्। एवमेकत्रकृतं मातामहाद्यर्घपात्रं गृहीत्वा मातामहद्विजस्या– ऽऽसनवामभागे 'मातामहेभ्यः स्थानमसीति' न्युब्जं कुर्यात्।[४९] तदुपरि कुशत्रयं दद्यात्।

ततः सव्येन– 'ॐ अर्चयिष्ये' देवब्राह्मणौ ब्रूयात्। 'ॐ अर्चय' तेनोक्ते गन्धपुष्पाऽक्षतताम्बूलयज्ञोपवीतवस्त्रादिभिः समभ्यर्च्य धूपदीपौ च कारयित्वा,कुशादिकमादाय– ॐ अद्याऽमुकगोत्राणामस्मत्पितृ–पितामह–प्रपितामहानाममुकामुकामुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणामद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे श्राद्धसम्बन्धिनो विश्वेदेवाः

४९. अब प्रपितामहको अर्घपात्रको फूल पवित्र पितामहको पात्रमा खन्याउनू र त्यो सबै पितृको पात्रमा खन्याउनू। अनि पालैसित दुना खप्टेर सव्य भई दुनाको जलले ॐ तच्चक्षु० पढेर बूढी र साहिली दायाँ औंलाले आँखामा स्पर्श गरी अपसव्य भएर 'पितृभ्यः स्थानमसि' भनी ब्राह्मणको बायाँ भागमा घोप्टाइदिनू। त्यसै गरी मातामहको पनि बायाँ घोप्टाउनुपर्दछ। अनि तीन टुक्रा कुश दुमामाथि राखिदिनू।

पुरूरवो माद्रवो नामानः, एतान्यर्चनानि, अत्र गन्धपुष्पाक्षतधूपदीप–नैवेद्यताम्बूलयज्ञोप–वीतवासांसि वःस्वाहा।। उत्सृजेत्। पुनःकुशादिकमादाय– ॐ अद्याऽमुकगोत्राणा–मस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकामुकशर्मणां सपत्नीकानां वसुरुद्रादित्य–स्वरूपाणामद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे श्राद्धसम्बन्धिनो विश्वेदेवाः पुरूरवो माद्रवो नामानः, एतान्यर्चनानि अत्र गन्धपुष्पाक्षतधूपदीपनैवेद्यताम्बूलयज्ञोपवीतवासांसि वः स्वाहा ।। उत्सृजेत्।[५०]

ततोऽपसव्येन, 'ॐ अर्चयिष्ये' पितृब्राह्मणौ पृच्छेत्। 'अर्चय' तेनोक्ते गन्धादिभिरभ्यर्च्य मोटकादिकमादाय– ॐ अद्याऽमुकगोत्रा अस्मत्पितृ–पितामह प्रपितामहा अमुकामुकामुकशर्माणः सपत्नीका वसुरुद्रादित्यस्वरूपा अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे,

५०. अब सव्य भएर पूजाको प्रश्नोत्तर गरी चन्दन, अक्षता, फूल, जनै, वस्त्र र धूप–दीप नैवेद्य चढाई कुश जल लिएर संकल्प गर्नू। त्यही क्रमले अर्को पनि संकल्प गर्नुपर्दछ।

एतान्यर्चनानि, अत्र गन्धपुष्पा–क्षतधूपदीपनैवेद्यताम्बूलयज्ञोपवीतवासांसि त्रेधा विभज्य युष्मभ्यं स्वधा। पुनर्मोटकमादाय– ॐ अद्याऽमुकगोत्रा अस्मन्मातामह–प्रमातामह–वृद्धप्रमातामहा अमुकामुकामुकशर्माणः सपत्नीका वसुरुद्रादित्यस्वरूपा अद्य कर्तव्य–महालयापरपक्षान्तर्गतपार्वणश्राद्धे एतान्यर्चनानि, अत्र गन्धपुष्पाक्षतधूपदीपनैवेद्य–ताम्बूलयज्ञोपवीतवासांसि त्रेधा विभज्य युष्मभ्यं स्वधा।[५१]

सव्येन विश्वेदेवब्राह्मणहस्तयोः 'ॐ अर्चनविधेः सर्वं परिपूर्णमस्तु' जलं दद्यात्, 'ॐ अस्तु'–प्रतिवचनम्। अपसव्येन पितृब्राह्मणहस्तयोः 'ॐ अर्चनविधेः सर्वं परिपूर्णमस्तु' जलं दद्यात्, 'ॐ अस्तु' प्रतिवचनम्। सव्येन–

ॐ यथा चक्रायुधो विष्णुस्त्रैलोक्यं परिरक्षति। एवं मण्डलभस्मैतत् सर्वभूतानि रक्षतु ॥

५१. अनि अपसव्य भएर पितृ–ब्राह्मणसित पूजाको प्रश्न गरी चन्दन, अक्षता, तिल, जल, धूप–दीप, नैवेद्य, जनै, सुपारी, पान सबै वस्तु चढाई मूल अनुसार संकल्प पढ्दै जानू। यसै गरी दुवै संकल्प भिन्न–भिन्न पढ्नुपर्दछ।

देवब्राह्मणयोः भोजनस्थाने चतुर्दिक्ष्वासनसहितं चतुष्कोणमण्डलं कुर्यात्। अपसव्येन पूर्वोक्तमन्त्रेण पितृब्राह्मणयोर्भोजनस्थाने चतुर्दिक्ष्वासनसहितं चतुष्कोणमण्डलं कुर्यात्।[५२]

अपसव्येनैवाऽग्नौकरणम्। दक्षिणाभिमुखः प्राचीनावीती पातितवामजानुः पुटकादौ सघृतमन्नं कृत्वा 'ॐ अग्नौकरणमहं करिष्ये' पितृब्राह्मणं पृच्छेत्, 'ॐ कुरुष्व' अनुज्ञातः सन् पितृब्राह्मणकरे जलपात्रे वा जुहुयात्। ॐ अग्नये कव्यवाहनाय स्वाहा, इदमग्नये कव्यवाहनाय। ॐ सोमाय पितृमते स्वाहा, इदं सोमाय पितृमते। आहुतिद्वयं जुहुयात्। हुतशेषान्नं सव्येन विश्वेदेवब्राह्मणपात्रोपरि क्षिपेत्, अपसव्येन पितृब्राह्मणपात्रेषु क्षिपेत्। ततोऽपसव्येनैव तिलघृतमधुजलयुतमोटकादिसहितमन्नमादाय दक्षिणाभिमुखो भूत्वा 'ॐ इदमन्नं सजलमेतद्भूस्वामिपितृभ्यो नमः' उत्सृजेत्।[५३]

५२. अब सव्य भएर विश्वेदेव ब्राह्मणमा 'ॐ अर्चन०' पढेर अलिकति जल चढाउनू। अनि अव्यसव्य भएर पितृ–ब्राह्मणमा पनि 'ॐ अर्चन०' भनेर जल चढाउनू, अनि सव्य भएर 'ॐ यथाचक्रायुधो०' पढेर विश्वेदेव ब्राह्मणको भोजनस्थानमा चारपाटे मण्डल बनाउनू। अनि अपसव्य भएर पितृ ब्राह्मणको भोजन–स्थानमा पनि चारपाटे मण्डल बनाउनू।

५३. अपसव्यले नै अग्नौकरण गर्नका लागि दक्षिणतिर फर्की बायाँ घुँडा मोरेर बायाँ हातमा एउटा कुश राखेर त्यसमाथि घिउ र अक्षता राख्नू र भूमिमा दूना राखेर त्यसमा जल हाली पितृब्राह्मणलाई

अन्नसङ्कल्पः। सव्येन तत्र विश्वेदेवान् ध्यायन् सोपस्करं यवजलयुतमन्नमुपनीय मधुनाऽभिघार्य, ऋजुहस्ताभ्यामन्नपात्रमालभ्य, 'ॐ पृथिवी ते पात्रम् द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृतेऽ अमृतं जुहोमि स्वाहा। ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्यपाᳪसुरे स्वाहा।। कृष्णकव्यमिदं रक्षमदीयमिति च पठित्वा विप्रदक्षिणाङ्गुष्ठं गृहीत्वा– ॐ इदमन्नम्–अन्ने, ॐ इमा आपः–जले, ॐ इदमाज्यम्–घृते, ॐ इदं हविः–पुनरन्ने, ॐ एतान्युपकरणानि, क्रमेणान्नजलघितेषु विप्रदक्षिणाङ्गुष्ठं निवेश्य, – ॐ यवोसि यवयास्मद्द्वेषो यवयारातीः।। यवानन्नोपरि विकीर्य कुश – यवजलान्यादाय वामहस्ताङ्गुल्यङ्गुष्ठैः क्रमेणाऽन्नमपश्च स्पृट्वा–ॐ अद्याऽमुकगोत्राणामस्मत्पितृ –पितामह– प्रपितामहानाममुकामुकामुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिभ्यो

सोधेर दूनाको जलमा 'ॐ अग्नये०' र 'ॐसोमाय०' दुइ मन्त्र पढी दुइ आहुति दिनू। हातमा रहेको शेष सव्य भएर विश्वेदेवमा अलिकति र अपसव्य भएर पितृब्राह्मणमा अलिकति चढाइदिनू।

अब अपसव्यले नै तिल–घृत–मधु–जल सहित दुनामा विकर लिएर 'इदमन्नं०' पढेर भूस्वामीलाई सिधा (अन्न) संकल्प गरिदिनू।

विश्वेभ्यो देवेभ्य: पुरूरवो माद्रवो नामभ्य: अद्यकर्तव्य-महालयापरपक्षान्तर्गत-पार्वणश्राद्धे, इदमन्नं सजलं सोपस्करं परिविष्टं परिवेक्ष्यमाणमक्षय्यतृप्तिहेतोर्व: स्वाहा। कुशादिकमुत्सृजेत्।। पुन:सर्वं पूर्ववत् विधाय कुशादिकमादाय, ॐ अद्याऽमुकगोत्राणा-मस्मन्मातामहप्रमातामह–वृद्धप्रमातामहानाममुकामुकामुकशर्मणां सपत्नीकानां वसुरुद्रादित्य-स्वरूपाणां–श्राद्धसम्बन्धिभ्यो विश्वेभ्यो देवेभ्य: पुरूरवो माद्रवो नामभ्य:, अद्यकर्तव्य-महालयापरपक्षान्तर्गतपार्वणश्राद्धे, इदमन्नं सजलं सोपस्करं परिविष्टिं परिवेक्ष्यमाण-मक्षय्यतृप्तिहेतोर्व: स्वाहा। कुशादिकमुत्सृजेत्।[५४]

ततोऽपसव्येन, सोपस्करं तिलजलयुतमन्नमुपनीय मधुनाऽभिघार्य, अधोमुखाभ्यां

५४. अब अन्नसंकल्पको लागि सव्य भएर विश्वेदेवतिर सिधा राखी जौ जल सहित घिउ मह छर्केर 'ॐ पृथिवी ते०' देखि 'स्वाहा' सम्म र इदं विष्णु० पनि पढ्नुपर्दछ। त्यसपछि ब्राह्मणको दाहिने अंगुष्ठ छोएको भावना गरी ॐ इदमन्नम् आदिको प्रश्नोत्तर गर्नू। अनि ॐ यवोसि० पढ्दै अन्नपात्रको चारैतिर जौ छरिदिनू। अनि जौ–कुश लिएर संकल्प गरिदिनू। त्यसपछि अर्को संकल्प पनि पढ्नुपर्दछ।

श्राद्धीयान्नस्य संकल्पो भूमावेव प्रदीयते। हस्तेषु दीयमानं तु पितॄणां नोपतिष्ठते।।

व्यस्ताभ्यां पाणिभ्यामन्नपात्रमालभ्य, ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृतेऽअमृतं जुहोमि स्वाहा। विप्रदक्षिणाङ्गुष्ठं गृहीत्वा 'ॐ इदमन्नम्, ॐ इमा आपः, ॐ इदमाज्यम्, ॐ इदं हविः, पुनरन्ने, ॐ एतान्युपकरणानि क्रमेणाऽन्नजलघृतादिषु विप्रदक्षिणाङ्गुष्ठं निवेश्य, 'ॐ अपहताऽअसुरा रक्षाᳬसि व्वेदिषदः। तिलान् विकीर्य मोटकादीन्यादाय वामहस्ताङ्गुष्ठाङ्गुलिभिः क्रमेणाऽन्नमपश्च स्पृष्ट्वा– ॐ अद्यामुक–गोत्रायाऽमस्मत्पित्रेऽमुकशर्मणे सपत्नीकाय वसुस्वरूपाय, अद्यकर्तव्यमहालयापरपक्षान्तर्गत–पार्वणश्राद्धे इदमन्नं सजलं सोपस्करं परिविष्टं परिवेक्ष्यमाणमक्षय्यतृप्तिहेतोस्ते स्वधा। पितृब्राह्मणसमीपे भूमौ मोटकादिकमुत्सृजेत्। एवं पितामहादिभ्यः पञ्चभ्यो दद्यात्।[५५]

५५. अपसव्य भएर सिधामा तिल–जल–मह छर्की अधोमुख पारी हातले सिधा स्पर्श गररे 'ॐ पृथिवी ते०' मन्त्र पढी ब्राह्मणको दाहिने अंगुष्ठ छोएको भावना गरी ॐ इदमन्नम्० देखि प्रश्नोत्तर गर्नू र बायाँ हातको कान्छी र बूढी औंलाले अन्नपात्र स्पर्श गरी मोटक लिएर संकल्प गर्नू। अनि अर्को संकल्प गरेर ब्राह्मणमा मोटक राखिदिनू। यही क्रमले पितामहादि सबैलाई दिनुपर्दछ।

ततः सव्येन देवब्राह्मणकरयोः, 'ॐ भवन्तौ प्राश. .म्' अपोशानं दद्यात्। अपसव्येन पितृब्राह्मणकरेषु, 'ॐ भवन्तः प्राशयन्तु', अपोशानं दत्त्वा। सव्येन श्राद्धकर्ता कुशोपरि विशन्– 'ॐ मधुव्वाताऽऋतायते मधुक्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः।। मधुनक्तमुतोषसोमधुमत्पार्थिवꣳ रजः मधुद्यौरस्तु नः पिता।। मधुमान्नोवनस्पतिर्मधुमाँ२।। ऽअस्तु सूर्य्यः। माध्वीर्गावो भवन्तु नः। ॐ मधु मधु मधु।

ॐ अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् । तत्सर्वमच्छिद्रमस्तु भास्करस्य प्रसादतः ।।

ॐ नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे । नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ।।[५६]

'यथासुखं जुषध्वम्'–वचनानन्तरं ते ब्राह्मणा मौनिनो भूत्वा भुञ्जीरन् संज्ञया च

---

'५६. सव्य भएर विश्वेदेवमा ॐ भवन्तौ० पढेर जल चढाउनू। अनि अपसव्य भएर पितृ–ब्राह्मणमा 'ॐ भवन्तः०' भनेर जल चढाउनू। अनि सव्य भएर श्राद्धकर्ताले एक टुक्रा कुश आसन–मनि राख्नू। अनि ॐ मधुव्वाता० का तीन मन्त्र पढेर तीनपल्ट मधु ३ भन्नू। त्यसपछि ॐ अन्नहीनं० र ॐ नमस्तुभ्यं० दुई मन्त्र पढ्नू।

भक्ष्यं प्रार्थयेयुः। ततः सप्रणवव्याहृतिकां गायत्रीं जपित्वा मधुव्वाताऽऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः। मधुनक्तमुतोषसोमधुमत्पार्थिवꣳ रजः। मधुद्यौरस्तु नः पिता।। मधुमान्नो वनस्पतिर्मधुमाँ२।। अस्तु सूर्य्यः माध्वीर्गावो भवन्तु नः। अत्रैव पितृसूक्तं च पठेत्।[५७]

ब्राह्मणानां यत्र यत्रेच्छोपलभ्यते तत्तत् प्रयच्छन् मन्दं मन्दं भोजयेत्।[५८]

विकिरासनम्—पितामहान्नपात्रसन्निधौ नैर्ऋत्यदिशि आस्तृतदक्षिणाग्रकुशत्रयायां भूमौ, अपसव्येन मोटकादिकमादाय विकिरासनं दद्यात्।[५९]

५७. तदेव १६ षोडश, अग्नयेकव्यवाहनाय षट् ६, कृणुष्वपाज इति पञ्च ५, सुरावन्तमित्यादि अपां फेनेन्तम् ३९, सहस्रशीर्षा० षोडशः १६, नमस्ते० इति षट्षष्टिः ६६, आशुः शिशानः० द्वादशः १२, इति पितृसूक्तस्य मन्त्रान् पुस्तकान्ते द्रष्टव्यम्।

५८. अब ब्राह्मणलाई सुखपूर्वक मौन रहेर भोजन गर्नुहोस् भन्नू अनि प्रणव सहित गायत्री जप्नू र ॐ अधुव्वाता० तीन मन्त्र पढ्नू। यसै मौकामा पितृसूक्त र रामगीता पाठ गर्नु वा गराउनुपर्दछ। अनि ब्राह्मणलाई बिस्तार–बिस्तार भोजन गर्नुहोस् भन्नू।

५९ . अब पितामहको नगीच नैर्ऋत्यतिर भूमिमा तीन टुक्रा कुश राखेर अपसव्य भई मोटक लिएर ॐ

असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् । उच्छिष्टभागधेयानां दर्भेषु विकिरासनम् ।।

मोटकरूपमासनमास्तृतकुशोपरि उत्सृजेत्। सतिलघृतमन्नमादाय जलेनाऽऽप्लाव्य मोटकादिकं चादाय–

अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम। भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ।।

आस्तृतकुशोपरि अन्नं विकिरेत्। ततः कुशान् परित्यज्य, हस्तौ पादौ प्रक्षाल्य, सव्येन द्विराचम्य (६) गायत्रीं जपित्वा, 'ॐ मधुव्वाता ऽऋतायते मधुक्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः। मधुनक्तमुतोषसोमधुमत्पार्थिवꣳ रजः। मधुद्यौरस्तु नः पिता।। मधुमान्नो वनस्पतिर्मधुमाँऽ२।। अस्तु सूर्य्यः, माध्वीर्गावो भवन्तु नः।।'

ततो ब्राह्मणान् तृप्तान् ज्ञात्वा 'ॐ जलगण्डूषमिदं ते' उभाभ्यां विश्वेदेवब्राह्मणाभ्यां प्रत्येकाय प्रत्यपोशानं दद्यात्। सव्येनैवाऽञ्जलिं बध्वा विश्वेदेवब्राह्मणौ प्रति प्रश्नः,

---

असंस्कृत० मन्त्र पढ्दै कुशमाथि मोटकको आसन दिनू। विकर दुनामा लिई घिउ मह र जल तिल हाली मोटक लिएर उठाउनू र ॐ अग्नि० मन्त्र पढेर आसनमाथि घोप्टाइदिनू। औंठी त्यहीं त्यागेर हात–पाउ पखाली, सव्य भएर दुइपल्ट (६) आचमन गरी ॐ मधुव्वाता तीन मन्त्र पढ्नू।

ॐ तृप्ताः स्थ ? ॐ तृप्ताः स्मः प्रतिवचनम्। 'ॐ शेषमन्नं किं क्रियताम् ?' 'ॐ इष्टैः सह भुज्यताम्' प्रतिवचनम्। 'ॐ पिण्डदानमहं करिष्ये', 'ॐ कुरुष्व' अनुज्ञातः सन्।

अपसव्येन — 'ॐ जलगण्डूषमिदं ते' पितृब्राह्मणाभ्यां प्रत्येकं प्रत्यपोशानं दद्यात्। अपसव्येनैव पितृब्राह्मणौ प्रति प्रश्नः। 'ॐ तृप्ताः स्थ ?' 'ॐ तृप्ताः स्मः' प्रतिवचनम्। 'ॐ शेषमन्नं किं क्रियताम्?' 'ॐ इष्टैः सह भुज्यताम्' प्रतिवचनम्। 'ॐ पिण्डदानमहं करिष्ये' 'ॐ कुरुष्व' इत्यनुज्ञातः सन्[६०] —

पिण्डदानम्—हस्तैकपरिमितां चतुरस्रां चतुरङ्गुलोच्छ्रितां सैकतादिकां दक्षिणप्लवां पिण्डिकां निर्माय। पिण्डिकामध्ये वामेन पाणिना दर्भपिञ्जुलीं गृहीत्वा, दक्षिणहस्ते कृत्वा सव्योपगृहीतदक्षिणपाणिना 'ॐ अपहताऽअसुरा रक्षाᳬ सि व्वेदिषदः।' दक्षिणाग्रां रेखाद्वयं कृत्वा दर्भपिञ्जुलीमुत्तरस्यां क्षिपेत्। तदुपरि, 'ॐ ये रूपाणि प्रतिमुञ्चमानाऽअसुराः

६०. अब ब्राह्मण अघाए ठानेर जल दिनू र ॐ तृप्ता स्थ भनेर मूल अनुसार प्रश्नोत्तर गर्नू अनि अपसव्य भएर ब्राह्मणलाई जल दिनू र तृप्ताः स्थ ? आदि प्रश्नोत्तर मूल अनुसार पढिलिनू।

सन्तः स्वधया चरन्ति। परापुरो निपुरो ये भरन्त्यग्निष्ठाँल्लोकान् प्रणुदात्यस्मात्।। अङ्गारं भ्रामयित्वा, तदङ्गारं दक्षिणस्यां क्षिपेत्। ततो जलेन— ॐ शन्नोदेवीरभीष्टयऽआपो भवन्तु पीतये। शंय्योरभिस्रवन्तु नः।। पिण्डिकासेचनम्। तदनु छिन्नमूलकुशान् दक्षिणाग्रान् पिण्डिकायामास्तीर्य।[६१] सव्येन।

ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च। नमः स्वाहायै स्वधायै नित्यमेव नमो नमः।। त्रिः।

अपसव्यं विधाय एकं पुटकं वामहस्ते कृत्वा मोटकादिकमादाय, ॐ अद्यामुकगोत्राऽस्मत्पितरमुकशर्मन् सपत्नीकवसुस्वरूपाद्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे पिण्डस्थानेऽत्राऽवनेजनं निक्ष्व ते स्वधा।। छिन्नमूलकुशोपरि अवनेजनं दद्यात्।

६१. अब पिण्डदानको लागि एक हात चाक्लो र चार अंगुल अग्लो दक्षिणतिर भिरालो परेको वेदी बनाउनू। अनि वेदीमा 'ॐ अपहताऽअसुरा०' मन्त्र पढेर दक्षिणाग्र पारी दुइ रेखा तान्नू र कुशचाहिं आफूतिर राख्नू। अनि ॐ ये रूपाणि० मन्त्र पढेर आगोको फिलुङ्गो वेदीमा घुमाउनू र दक्षिणतिर खसालिदिनू। अनि वेदीमा ॐ शन्नोदेवी० मन्त्र पढेर जल छर्किदिनू। अनि पिण्डिकामा कुश बिछाउनू।

एवं पितामहादिभ्य: पञ्चभ्यो दद्यात्।[६२] सत्रौं पृष्ठको तलका पितृहरूलाई पनि अवनेजन दिनू र तल पाँचौं हारको पितामहादि पाँचको बाद पिण्ड पनि दिनुपर्छ ।।

ततः पिण्डान् निर्माय मोटकादीनि प्रथमपिण्डं चाऽऽदाय वामहस्ते पुटकादिस्थजलमादाय— ॐ अद्यामुकगोत्राऽस्मत्पितरमुकशर्मन् सपत्नीक वसुस्वरूपाऽद्यकर्तव्यमहालया—परक्षान्तर्गतपार्वणश्राद्धे, एष पिण्डोऽमृतस्वरूपोऽक्षय्यतृप्तिहेतोस्ते स्वधा। अवनेजनोपरि पिण्डं दद्यात्। एवं पितामहादिभ्यः पञ्चभ्योऽवनेजनोपरि पिण्डं दद्यात्। ततः आस्तृतकुशमूलेन 'लेपभागभुजस्तृप्यन्तु' करं प्रोक्ष्य। सव्यं कृत्वा द्विराचम्य(६) हरिं स्मरेत्। ततः सव्येनैव पुष्पादीन्यादाय पित्रादीनुद्दिश्य, ॐ अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् । सव्यपार्श्वेन, उत्तराभिमुखो भूत्वा श्वासं नियम्य भास्करमूर्तीन्

६२. अब सव्य भएर तीनपल्ट ॐ देवताभ्य:० मन्त्र पढ्नू। अनि अपसव्य भएर मोटक लिई मूल अनुसार संकल्प पढेर अघि बिछाएको कुशमाथि मोटक राखिदिनू। यही क्रमले पितामहादि सबैलाई आसन दिनू।

पित्रादीनुद्दिश्य अपसव्यं कृत्वा दक्षिणाऽवर्तेन दक्षिणाभिमुखो भूत्वा 'ॐ अमीमदन्तपितरोयथाभागमावृषायिषत।' पुष्पादि पिण्डेषु क्षिपेत्।[६३]

ततः प्रत्यवनेजनपात्रं वामहस्ते कृत्वा मोटकादिकमादाय, ॐ अद्यामुकगोत्राऽस्मत्पितरमुकशर्मन् सपत्नीक वसुस्वरूपाऽद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे, इदं पिण्डप्रत्यवनेजनं ते स्वधा। पितृपिण्डे प्रत्यवनेजनं दद्यात्। एवं पितामहादि–पञ्चपिण्डेषु प्रत्यवनेजनं दद्यात्। ततो नीवीं विस्रंस्य, सव्यं कृत्वा, आचम्य हरिं स्मरेत्। अपसव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणेनाऽऽदाय, 'ॐ नमो वः पितरो रसाय नमो वः

६३. अब पिण्ड बनाएर पहिलो पिण्ड मोटक जल लिई मूल अनुसार संकल्प पढेर आसनमा राखिदिनू। यही क्रमले सबै पितृहरूलाई पिण्ड दिनुपर्दछ। अनि वेदीमा बिछाएको कुशले ॐ लेपभाग० पढेर हात पुछिलिनू। अनि सव्य भएर दुइपल्ट आचमन गरी हरिस्मरण गर्नू। अनि सव्यले नै पितृहरूको ध्यान गरी ॐ अत्र पितरो० पढी श्वास रोकेर भास्कररूपी पितृको ध्यान गरेर अपसव्य भई दक्षिणतिर फर्केर ॐ अमीमदन्त मन्त्र पढेर फूल अक्षता पिण्डमा चढाइदिनू।

पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्तसतो वः पितरो देष्मै तद्वः पितरो व्यासः ।। प्रत्येकं पिण्डोपरि सूत्रं दद्यात्। ततः क्रमेण प्रत्येकं पिण्डान् गन्धादिभिः सम्पूज्य धूपदीपौ च कारयेत्। मोटकादिकमादाय– 'ॐ अद्यामुकगोत्राः अस्मत्पितृ–पितामह–प्रपितामहाः अमुकामुकामुकशर्माणः सपत्नीकाः वसुरुद्रादित्यस्वरूपाः अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे एतानि पिण्डार्चनानि, अत्र सूत्रगन्धपुष्पाक्षत धूपदीपैक्षवादिनैवेद्यानि त्रेधा विभज्य युष्मभ्यं स्वधा।। पित्रादिभ्यो गन्धादिकमुत्सृजेत्।[६४]

पुनरपि मोटकादिकमादाय–ॐ अद्यामुकगोत्राः, अस्मन्मातामह–प्रमातामह–वृद्धप्रमातामहाः, अमुकामुकामुकशर्माणःसपत्नीकाः, वसुरुद्रादित्यस्वरूपाः, अद्यकर्तव्य–

६४. अब प्रत्यवनेजनको लागि मोटक–जल लिएर संकल्प गरी प्रत्येक पिण्डमा चढाउनू। यही क्रमले सबै पिण्डमा अवनेजन दिनुपर्दछ। अनि कम्मरमा घुसारेको खसालिदिनू। सव्य भएर आचमन गरी हरिको स्मरण गर्नू। अनि अपसव्य भएर सूत्र वा काँचो धागो प्रत्येक पिण्डमा ॐ नमो वः यो मन्त्र पढ्दै चढाउनुपर्दछ। अनि प्रत्येक पिण्डको पूजामा चन्दन, अक्षता, वस्त्र, जनै, सुपारी, पान, धूप–दीप नैवेद्य–चढाउनु अनि संकल्प गरेर पिण्डमा मोटक चढाउनू। यो क्रम सबै पिण्डमा गर्नुपर्दछ र संकल्प पनि भिन्न–भिन्न गर्नुपर्दछ।

महालयापरपक्षान्तर्गतपार्वणश्राद्धे एतानि पिण्डार्चनानि, अत्र सूत्रगन्धपुष्पाऽक्षत–धूपदीपैक्षवादिनैवेद्यानि त्रेधा विभज्य युष्मभ्यं स्वधा॥ इति मातामहादिभ्यो गन्धादिक–मुत्सृजेत्॥ ततः सव्येन विश्वेदेवब्राह्मणकरयोः 'ॐ शिवा आपः सन्तु– जलम्, ॐ सौमनस्यमस्तु– पुष्पम्, ॐ अक्षतं चारिष्टमस्तु–तण्डुलान्' प्रत्येकं दद्यात्। अपसव्येन पितृब्राह्मणकरयोः 'ॐ शिवा आपः सन्तु' जलम्, ॐ सौमनस्यमस्तु–पुष्पम्, ॐ अक्षतं चारिष्टमस्तु– तण्डुलान् प्रत्येकं दद्यात्। सव्येनाऽञ्जलिं बध्वा पूर्वाभिमुखो भूत्वा–

ॐ अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम्। ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवन्तु मे ॥
लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे । लक्ष्मीर्वसति गोष्ठेषु सौमनस्यं ददातु मे ॥
अक्षतं चाऽस्तु मे पुण्यं शान्तिः पुष्टिर्धृतिस्तथा । यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ॥

ततः कर्मपात्रोदकं कुशैर्गृहीत्वा प्रतिमन्त्रं स्वशिरस्यभिषिञ्चेत्– 'ॐ अस्मत्कुले दीर्घमायुरस्तु, ॐ शान्तिरस्तु, ॐ पुष्टिरस्तु, ॐ वृद्धिरस्तु, ॐ यच्छ्रेयस्तदस्तु, ॐ यत् पापं तत् प्रतिहतमस्तु' इति भूमौ। ॐ द्विपदेभ्यश्चतुष्पदेभ्यः शान्तिर्भवतु।[६५]

६५. अब सव्य भएर विश्वेदेव ब्राह्मणको हातमा ॐ शिवा० देखि ॐ अक्षतं चारिष्टमस्तु०सम्म पढ्दै दिनुपर्दछ। अनि अपसव्य भएर पितृब्राह्मणतिर पनि त्यही क्रमले गर्नुपर्दछ। अनि सव्य भएर पूर्व फर्किई

ततोऽपसव्येन पिण्डशेषान्नं पिण्डसमीपे विकिरेत्। वामहस्ते पुटकादिस्थजलं गृहीत्वा मोटकादिकमादाय— 'ॐ अद्याऽमुकगोत्रस्याऽस्मत्पितुरमुकशर्मणः सपत्नीकस्य वसुस्वरूपस्य, अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे दत्तैतदन्नपानादिकमक्षय्यमस्तु,' पितृपिण्डोपरि अक्षय्योदकं दद्यात्। एवं पितामहादिपञ्चपिण्डेभ्यो दद्यात्। ततः सव्येन कृताञ्जलिर्दक्षिणां दिशमवलोकयन् 'ॐ अघोराः पितरः सन्तु' पिण्डोपरि पूर्वाग्रां जलधारां दद्यात्। सव्येनैव प्राङ्मुखोऽञ्जलिं बद्ध्वा आशिषः प्रार्थयेत्—

ॐ गोत्रन्नो वर्धताम्, ॐ वर्धताम्—प्रतिवचनम्। ॐ दातारो नोऽभिवर्धन्ताम्, ॐ वर्धन्ताम्। ॐ वेदाः सन्ततिरेव च, ॐ सन्तु। ॐ श्रद्धा च नो मा व्यगमत्, ॐ मागात्। ॐ बहुदेयं च नोऽस्तु, ॐ अस्तु। ॐ अन्नं च नो बहु भवेत्, ॐ भवतु। ॐ अतिथींश्च

---

अंजलि जोरी 'ॐ अपां मध्ये॰ 'देखि सदा मम' सम्म पढ्नू। अनि कर्मपात्रको कुश लिएर आफ्नू शिरमा / अभिषेक गर्दै जानू। मन्त्र मूल अनुसार ॐ अस्मत्कुले॰ देखि यच्छ्रेयस्तदस्तु सम्म पढ्नू र एकपल्ट भूमिमा जल छर्कदा ॐ द्विपदे॰ भन्नू।

लभेमहि, ॐ लभध्वम्। ॐ याचितारश्च नः सन्तु, ॐ सन्तु। ॐ मा याचिष्म कञ्चन, ॐ मा याचेथाः। ॐ एता आशिषः सत्याः सन्तु, ॐ सन्तु–प्रतिवचनम्। ततः श्राद्धकर्ता ब्राह्मणहस्तेन तिलकं कुर्यात्। ॐ यं कामं कामयते सोऽस्मै कामः समृध्यताम्।[६६]

ततोऽपसव्येन सपवित्रान् कुशान् न्युब्जपात्राधःस्थितान् पिण्डोपरि निक्षिप्य, 'ॐ स्वधां वाचयिष्ये' 'ॐ वाच्यताम्'–प्रतिवचनानन्तरं रिक्ताञ्जलिना– 'ॐ अद्यामुकगोत्रेभ्यो–ऽस्मत्पितृ–पितामह–प्रपितामहेभ्योऽमुकामुकामुकशर्मभ्यः सपत्नीकेभ्यो वसुरुद्रादित्य–स्वरूपेभ्यस्तथाऽमुकगोत्रेभ्योऽस्मन्मातामह–प्रमातामह–वृद्धप्रमातामहेभ्योऽमुकामुकामुक–

६६. अब अपसव्य भएर पिण्ड–शेष पिण्डको नगीचै राखिदिनू। अनि मोटक र जल लिएर संकल्प गरी अक्षय्योदक प्रत्येक पिण्डमा भिन्न–भिन्न दिनुपर्दछ। त्यसपछि सव्य भएर दक्षिणतिर हेर्दै ॐ अघोराः० मन्त्र पढी जलधारा दिनू। अनि पूर्वतिर फर्केर अंजलि जोरी आशिषका मन्त्रहरू ॐ गोत्रन्नो वर्धताम् देखि ॐ सन्तु सम्म प्रश्नोत्तर पढ्नुपर्दछ। अनि ॐ यं कामं० पढेर श्राद्धकर्ताले पुरोहितको हातबाट तिलक लगाउनू।

शर्मभ्यः सपत्नीकेभ्यो वसुरुद्रादित्यस्वरूपेभ्यः अद्यकर्तव्यमहालयापरपक्षान्तर्गतपार्वणश्राद्धे स्वधोच्यताम्' '३ॐ अस्तु स्वधा' प्रतिवचनम्। ततः पयसादिसहितं पुटकं वामहस्ते कृत्वा— '३ॐ ऊर्जम्बहन्तीरमृतं घृतम्पयः कीलालं परिस्रुतम्। स्वधास्थ तर्पयत मे पितॄन्।' सपवित्रकुशोपरि दक्षिणाग्रां पयोधारां दद्यात्। ततः '३ॐ पिण्डाः सम्पन्नाः' ३ॐ सुसम्पन्नाः प्रतिवचनम्।। ३ॐ पिण्डानुत्थापयामि '३ॐ उत्थापयस्व' अनुज्ञातः सन् नम्रीभूय सव्येन पिण्डानाघ्राय, अपसव्यनोत्थापयेत्, पिण्डाधारकुशानुल्मुकाँश्च वह्नौ क्षिपेत्।[६७]

वसन्तपूजनम्—सव्येन पिण्डिकायां शंखं चक्रं (७४) लिखेत्। ३ॐ शङ्खाय नमः।

६७. अब अपसव्य भएर अर्घपात्र—मुनिको फूल पवित्र पिण्डमा चढाउँदा ३ॐ स्वधा०मन्त्र पढ्नू। अनि रित्तो हात देखाएर संकल्प पढी ३ॐ अस्तु स्वधा सम्म पढ्नुपर्दछ। अनि गाईको काँचो दूधमा तिल हालेर ३ॐ उर्ज्जं वहन्ती० मन्त्र पढेर दक्षिणतिर धारो लगाई चढाउनू। अनि ३ॐ पिण्डाः सम्पन्ना:० देखि ३ॐ उत्थापयस्व सम्म पढेर नम्र भई सव्य भएर बास्ना लिई अपसव्य भएर उठाउनू र बिछाएको कुश आगोमा हालिदिनू।

ॐ चक्राय नमः। यवैः शङ्खचक्रपूजां विधाय, अपसव्यं कृत्वा–

ॐ गयायां पितृरूपेण स्वयमेव जनार्दनः। तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् ॥

पिण्डान् पिण्डिकोपरि निधाय सव्येन पूजयेत्–

ॐ वसन्ताय नमस्तुभ्यं ग्रीष्माय च नमो नमः। वर्षाभ्यश्च शरत्संज्ञ ऋतवे च नमो नमः ॥

हेमन्ताय नमस्तुभ्यं नमस्ते शिशिराय च। माससंवत्सरेभ्यश्च दिवसेभ्यो नमो नमः ॥

कर्पूरदीपं दत्त्वा, सव्येनैव विश्वेदेवार्घपात्रं सञ्चाल्य, अपसव्येन पित्रर्घपात्राण्युत्तानीकरणम्।[६८]

दक्षिणासङ्कल्पः।सव्येन कुशयवजलदक्षिणाद्रव्याण्यादाय 'ॐ अद्यामुकगोत्राणामस्मत्पितृ–

---

६८. अब सव्य भएर पिण्डिकामा शंख–चक्र (७४) लेख्नू र जौले शंख–चक्रको पूजा गरिदिनू। अनि अपसव्य भएर ॐ गयायां॰ पढेर पिण्डलाई पिण्डिकामा राख्नू र वसन्त पूजामा वसन्ताय॰ देखि दिवसेभ्यो नमो नमः सम्म पढ्नू र कपूर बालिदिनू। अनि सव्यले नै विश्वेदेव ब्राह्मणको अर्घपात्र उत्तानो पारिदिनू।

—पितामह—प्रपितामहानाममुकामुकामुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां पुरूरवो माद्रवो नाम्नामद्यकृतैतन्महालयापरपक्षान्तर्गतपार्वणश्राद्धे श्राद्धसम्बन्धिवैश्वदेविकश्राद्धप्रतिष्ठा—सिद्ध्यर्थं दक्षिणां हिरण्यमग्निदैवतं तन्मूल्योपकल्पितं द्रव्यममुकगोत्राय, अमुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे। ब्राह्मणकरे उत्सृजेत्।

पुनर्दक्षिणासहितकुशादिकमादाय 'ॐ अद्यामुकगोत्राणामस्मन्मातामह—प्रमातामह—वृद्धप्रमातामहानाममुकामुकामुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां पुरूरवो माद्रवो नाम्नामद्यकृतैतन्महालयापरपक्षान्तर्गतपार्वणश्राद्धसम्बन्धिवैश्वदेविकश्राद्धप्रतिष्ठासिद्ध्यर्थं दक्षिणां हिरण्यमग्निदैवतं तन्मूल्योपकल्पितं द्रव्यममुकगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे' ब्राह्मणकरे उत्सृजेत्।

कुशतिलजलदक्षिणाद्रव्याण्यादाय, ॐ अद्यामुकगोत्राणा मस्मत्पितृपितामहप्रपिता—महानाममुकामुकामुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणामद्यकृतैतन्महालयापरपक्षान्तर्ग—तपार्वणश्राद्धप्रतिष्ठासिद्ध्यर्थं दक्षिणां रजतं चन्द्रदैवतं तन्मूल्योपकल्पितं द्रव्यममुक—

गोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे।

पुनःकुशतिलजलदक्षिणाद्रव्याण्यादाय,– 'ॐ अद्यामुकगोत्राणामस्मन्मातामह–प्रमातामह–वृद्धप्रमातामहानाममुकामुकामुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणा मद्यकृतैतन्महालयापरपक्षान्तर्गतपार्वण– श्राद्धप्रतिष्ठासिद्ध्यर्थं दक्षिणां रजतं चन्द्रदैवतं तन्मूल्योपकल्पितं द्रव्यममुकगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे' ब्राह्मणकरे उत्सृजेत्।

पुनः कुशतिलजलभूयसीदक्षिणाद्रव्याण्यादाय–'ॐ अद्यामुकगोत्राणामस्मत्पितृ–पितामह–प्रपितामहानाममुकामुकामुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां तथा अमुकगोत्राणा–मस्मन्मातामह–प्रमातामह–वृद्धप्रमातामहानाममुकामुकाऽमुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां विश्वेदेवपूर्वकाणां पुरूरवो माद्रवो नाम्नामद्यकृतैतन्महालयापर–पक्षान्तर्गत पार्वणश्राद्धे न्यूनातिरिक्तपरिपूर्णार्थं यद्देयमन्नादिकं दक्षिणाद्रव्यं यथानामदैवतं

नानानामगोत्रेभ्यो नानानामशर्मभ्यो ब्राह्मणेभ्यः कन्या–कुमारेभ्यश्च यथाभागं विभज्य यथाकालेन दातुमहमुत्सृजे।[६९]

अपसव्येन– 'ॐ व्वाजे व्वाजे वतव्वाजिनोधनेषु व्विप्राऽअमृताऽ ऋतज्ञाः। अस्य मध्वः पिबतमादयध्वं तृप्तायातपथिभिर्द्देवयानैः।।' इति पित्रादीन् विसर्जयेत्।

ततः सव्यं कृत्वा– 'ॐ पुरूरवो माद्रवो नाभानो विश्वेदेवाः प्रीयन्ताम्' इति विश्वेदेवविसर्जनम्।। ततः–

ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव नमो नमः।। त्रिः।

अपसव्येन दीपाच्छादनं विधाय। सव्येन हस्तौ पादौ प्रक्षाल्याऽऽचम्य, ॐ यत्कृतं तत् सुकृतमस्तु, यन्न कृतं तद्विष्णोः प्रसादात् ब्राह्मणवचनात् सर्वं परिपूर्णमस्तु।।

---

६९. अब सव्य भएर कुश, जौ र जल द्रव्य लिई विश्वेदेवको दक्षिणा संकल्प गरेर दिनू। संकल्प मूलमा छ। अर्को संकल्प गरेर पितृ–ब्राह्मणलाई दक्षिणा संकल्प गरेर दिनू। अनि सबैलाई दिने दक्षिणा संकल्प पनि मूल अनुसार गरिदिनू।

ॐ प्रमादात् कुर्वतां कर्म प्रच्यवेताऽध्वरेषु च । स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः॥
आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च । प्रयच्छन्तु तथा राज्यं पितरः श्राद्धतर्पिताः ॥
कायेन वाचा मनसेन्द्रियैर्वा, बुद्ध्यात्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत् सकलं परस्मै, नारायणायेति समर्पये तत् ॥
यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥[७०]

ॐ अच्युताय नमः, ॐ अच्युताय नमः, ॐ अच्युताय नमः॥

॥ इति पार्वणश्राद्धविधिः॥

•

७०. अब अपसव्य भएर ॐ व्याजे व्याजे० मन्त्र पढी पितृहरूको विसर्जन गरिदिनू। अनि सव्य भएर विश्वेदेवको विसर्जन गर्नू। अनि ॐ देवताभ्यः० तीनपल्ट पढिलिनू। अनि अपसव्य भएर बत्ती ढाकिदिनू। सव्य भएर हात–पाउ पखाली आचमन गर्नू र ॐ यत् कृतं०, ॐ प्रमादात्०, आयुः प्रजां०, ॐ कायेन वाचा०, ॐ यस्य स्मृत्या०, ॐ चतुर्भिश्च० इत्यादि मन्त्र मूल अनुसार पढिसकेर ॐ अच्युताय नमः तीनपल्ट पढिलिनू।

# एकपार्वणश्राद्धविधिः

श्राद्धाऽऽरम्भेऽवसाने च पादशौचे तथाऽर्चने ।
विकरे पिण्डदाने च षट्स्वाचमनमिष्यते ।। —इति मनुः।
शुचिदेशं विविक्तं तु गोमयेनोपलेययेत् ।
श्राद्धे दीपप्रदानेन तेजस्वी जायते नरः ।।
दीपहीने दहेच्छ्राद्धमन्धे तमसि मज्जति । —इति ब्राह्मे।
निधाय वा दर्भबटूनासनेषु समाहितः ।
प्रैषाऽनुप्रैषसंयुक्तं पर्वश्राद्धं प्रकल्पयेत् ।।

अत्र त्रयः पिण्डाः। एको विश्वेदेवब्राह्मणः, एकः पितृब्राह्मणो द्वौ ब्राह्मणौ स्थापनीयौ। आचम्य प्राणानायम्य गोमयोपलिप्ते प्राङ्गणे दीपं याम्याऽभिमुखं प्रज्वाल्य, 'ॐ रक्षोघ्नदीपाय नमः' सम्पूज्य, ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः।। ब्राह्मणं पवित्रं कृत्वा सव्येन ताम्बूलादिकं विप्रहस्ते दत्त्वा पूर्वाभिमुखो वामहस्तेन विश्वेदेवब्राह्मणस्य दक्षिणजानु स्पृष्ट्वा स्वदक्षिणजानु च पातयित्वा

अधोमुखेन स्वदक्षिणहस्तेन सताम्बूलादिकमुत्तानं विप्रकरं गृहीत्वा निमन्त्रयेत्॥

ॐ अद्येत्यादि, अमुकगोत्राणामस्मत्पितृ–पितामह–प्रपितामहानाममुकामुकामुक–शर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनां विश्वेषां देवानां पुरूरवो माद्रवो नाम्नामद्यकर्तव्यसांवत्सरिकैकपार्वणश्राद्धे एभिश्चन्दनपुष्पाक्षतपूगीफलयज्ञोपवीतवासोभिस्त्वं मया निमन्त्रितः। 'ॐ निमन्त्रितोऽस्मि'– प्रतिवचनम्।।[६९]

ततोऽपसव्यं कृत्वा ताम्बूलादिकं विप्रहस्ते दत्त्वा दक्षिणाभिमुखो वामहस्तेन पितृब्राह्मणस्य वामजानु स्पृष्ट्वा स्ववामजानु च पातयित्वा उत्तानेन स्वदक्षिणकरेण सताम्बूलादिकं विप्रकरं गृहीत्वा निमन्त्रयेत्– ॐ अद्येत्यादि, अमुकगोत्राणामस्मत्पितृ–पितामह–

६९. एकपार्वण श्राद्धमा एक विश्वेदेव ब्राह्मण र एउटै पितृब्राह्मण थापुपर्दछ। आचमन र प्राणायाम गरेर गोबरले लिपेको स्थानमा आफूतिर फर्काएर बत्ती बल्नू र 'रक्षोघ्नदीपाय नमः' भनेर पूजा गर्नू। ॐ पवित्रेस्थो० पढेर कुशको ब्राह्मण बनाएर स्थापना गर्नू। तिनै पूर्व फर्केका विश्वेदेव ब्राह्मणको बायाँ हातले दाहिने घुँडा छोएको भावना र शिर निहुराई दाहिने हातले पान फूल लिएर निमन्त्रणको संकल्प गरिलिनू।

प्रपितामहानाममुकामुकामुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणामद्यकर्तव्य- सांवत्सरिकैकपार्वणश्राद्धे एभिर्गन्धपुष्पाक्षतपूगीफलयज्ञोपवीतवासोभिस्त्वं मया निमन्त्रितः।। 'ॐ निमन्त्रितोऽस्मि' प्रतिवचनम्।॰ कर्ता-

अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः। भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा ।।
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः। भवितव्यं भवद्भिर्नोऽद्यतने श्राद्धकर्मणि ।।

ॐ भवितव्यम्- प्रतिवचनम्।। ततः सव्येन विश्वेदेवब्राह्मणस्य चरणौ प्रक्षालयेत्।

ॐ नमोस्त्वनन्ताय सहस्रमूर्तये, सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते, सहस्रकोटीयुगधारिणे नमः ।।
यत्फलं कपिलादाने कार्तिक्यां ज्येष्ठपुष्करे । तत्फलं पाण्डवश्रेष्ठ विप्राणां पादशौचने ।
विप्रपादोदकं पीत्वा यावत् तिष्ठति मेदिनी । तावत् पुष्करक्षेत्रेषु पिबन्ति पितरो जलम् ।।

॰ दर्श (औंसी) श्राद्धमपि अनेनैव विधिना कर्तव्यम् । अस्त्रीणाम् पितृपितामह- प्रपितामहानामेव ।

ततः पाद्यपात्रं वामहस्ते कृत्वा– 'ॐ शन्नोदेवीरभिष्टयऽआपो भवन्तु पीतये। शंय्योरभिश्रवन्तु नः'।। कुशादिकमादाय– ॐ अद्येहामुकगोत्राणामस्मत्पितृ–पितामह– प्रपितामहानाम–मुकामुकामुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनो विश्वेदेवाः पुरूरवो माद्रवो नामानः एष पादार्घो वः स्वाहा।।[७१] ततोऽपसव्येन पितृब्राह्मणस्य चरणौ प्रक्षालयेत्।

ॐ नमोस्त्वनन्ताय सहस्रमूर्तये, सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते, सहस्रकोटीयुगधारिणे नमः ।।
यत्फलं कपिलादाने कार्त्तिक्यां ज्येष्ठपुष्करे । तत्फलं पाण्डवश्रेष्ठ विप्राणां पादशौचने ।।
विप्रपादोदकं पीत्वा यावत् तिष्ठति मेदिनी । तावत् पुष्करतीर्थेषु पिबन्ति पितरो जलम् ।।

पाद्यपात्रं वामहस्ते कृत्वा– 'ॐ शन्नोदेवीरभीष्टयऽ आपो भवन्तु पीतये। शंय्योरभिस्रवन्तु

७१. अब 'ॐ अक्रोधनैः० र ॐ सर्वायास० दुइ मन्त्र पढ्नू र 'भवितव्यम्' भन्नू। सव्य भएर विश्वेदेव ब्राह्मणको पाउ धोइदिंदा ॐ नमोस्त्वनन्ताय०,यत्फलं०, ॐ विप्रपादोदकं० इत्यादि मन्त्रहरू पढी दुना बायाँ हातमा लिनू र ॐ शन्नोदेवी० मन्त्र पढी कुश–जल लिई संकल्प मूल–अनुसार पढिदिनू।

नः।। मोटकमादाय— ॐ अद्येहामुकगोत्राः अस्मत्पितृ—पितामह—प्रपितामहा अमुकामुका—मुकशर्माणः सपत्नीकाः वसुरुद्रादित्यस्वरूपा अद्यकर्त्तव्यसांवत्सरिकैकपार्वणश्राद्धे एष पादार्घस्त्रेधा विभज्य युष्मभ्यं स्वधा।।

ततः सव्येनाऽऽचम्य गृहं प्रवेशयेत्। ॐ आगता यूयम्। ॐ सुस्वागता वयम्।। ॐ इदमासनम् आस्यताम्।। ॐ आसे प्रतिवचनम् । ॐ भूर्भुवः स्वः विश्वेदेवब्राह्मणं पूर्वाभिमुखमुपवेशयेत्। ततोऽपसव्येन— ॐ आगता यूयम्। ॐ सुस्वागता वयम्। ॐ इदमासनमास्यताम्। ॐ आसे प्रतिवचनम्। ॐ भूर्भुवः स्वः पितृब्राह्मणमुदङ्मुखमुपवेशयेत्।[७२]

देवकर्मपात्रम्— सव्येन। ॐ कर्मपात्रमहं करिष्ये। कुरुष्व अनुज्ञातः सन्

७२. अनि अपसव्य भएर पितृब्राह्मणको पाउ पखाल्दा पहिले ॐ नमोस्त्वनन्ताय०, ॐ विप्रपादोदकं०आदि मन्त्र पढेर दुना बायाँ हातमा लिई ॐ शन्नो देवी० मन्त्र पढी मोटक लिएर संकल्प गर्नू। अनि सव्य भएर आचमन गरी ॐ आगता० आदि प्रश्नोत्तर गरी पूर्वाभिमुख प्रवेश गराउनू। अनि अपसव्य भएर ॐ प्रश्नोत्तर पढी पश्चिम फर्काएर प्रवेश गराउनू।

ॐ यद्देवादेवहेडनन्देवासश्च कृमाव्वयम्। अग्निर्मातस्मादेनसो विश्वान्मुञ्चत्वꣳ हसः। यदि दिवायदि नक्तमेनाꣳसि च कृमाव्वयम्। व्वायुर्मातस्मादेनसोविश्वान्मुञ्चत्वꣳ हसः॥ यदि जाग्रद्यदिस्वप्न ऽएनाꣳसि च कृमाव्वयम्। सूर्य्योमातस्मादेनसो व्विश्वान्मुञ्चत्वꣳ हसः॥ कर्मपात्रार्थम् पात्रं पुरतो निधाय, 'ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः'॥ पवित्रं प्रक्षिप्य, ॐ शन्नोदेवीरभिष्ट—यऽआपो भवन्तु पीतये। शंय्योरभिस्रवन्तु नः॥— जलेनाऽऽपूर्य,— ॐ गन्धद्वारां दुराधर्षान्नित्यपुष्टाङ्करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥ — गन्धम्। ॐ यवोसि यवयास्मद्द्वेषोयवयारातीः॥— यवान्॥ ॐ श्रीश्चते लक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वे—नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण॥—पुष्पं च क्षिपेत्।[७३]

७३. अब विश्वेदेवको कर्मपात्रमा सव्य भएर ॐ यद्देवा० र ॐ पवित्रेस्थो० यस मन्त्रले पवित्र हाली ॐ शन्नोदेवी०यसले जल, ॐ गन्धद्वारान्० यसले चन्दन, ॐ यवोसियवया० यसले जौ र ॐ श्रीश्चते० यसले फूल हाल्नू।

पितृकर्मपात्रम्— अपसव्यं कृत्वा 'ॐ कर्मपात्रमहङ्करिष्ये' पितृब्राह्मणं पृच्छेत्। ॐ कुरुष्व—अनुज्ञातः सन् कर्मपात्रम्—यद्देवादेवहेडनन्देवासश्चकृमा व्वयम्। अग्निर्म्मातस्मादेन—सोविश्वान्मुञ्चत्वꣳ हसः।। यदि दिवा यदि नक्तमेनाꣳ सि च कृमा व्वयम्। व्वायुर्म्मातस्मादेन—सोव्विश्वान्मुञ्चत्वꣳ हसः।। यदि जाग्रद्यदि स्वप्नऽएनाꣳ सि च कृमा व्वयम्। सूर्य्योमातस्मादेन—सोविश्वान्मुञ्चत्वꣳ हसः।। पवित्रम्— ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः।। जलम्— ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये। शंय्योर—भिरस्त्रवन्तुनः।। चन्दनम्—ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीम् सर्वभूतानां तामिहोपह्वये श्रियम्।। तिलान्— ॐ तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान् पृणाहि नः स्वाहा।। पुष्पम्— ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण।।

सव्येन कुशत्रयसहितं कर्मपात्रोदकमादाय–

ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा। यः स्मरेत् पुण्डरीकाक्षं स बाह्याऽभ्यन्तरः शुचिः ॥

'ॐ पुण्डरीकाक्षः पुनातु' – श्राद्धदेशे द्रव्याण्यात्मानं च सिञ्चेत्॥

सङ्कल्पः– ॐ तत्सत् ३, ॐ विष्णुः ३, ॐ नमः अद्य इत्यादि देशकालौ संकीर्त्य अमुकगोत्राणामस्मत्पितृ–पितामह–प्रपितामहानाममुकामुकामुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां पुरूरवो माद्रवो नाम्नां विश्वेदेवपूर्वकाणामद्यकर्तव्य–सांवत्सरिकैकपार्वणश्राद्धम् एभिर्द्रव्यैरहं करिष्ये। इति प्रतिज्ञां कृत्वा–

ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥

सप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ । चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ॥

तेऽपि जाता: कुरुक्षेत्रे ब्राह्मणा वेदपारगा: ।
प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ ।।
ये विप्रमुख्या: कुरुजाङ्गलेषु, जातास्तथा दासकुले मृगाश्च ।
कालञ्जरे सप्त च चक्रवाका, ये मानसे ते वयमत्र सिद्धा: ।।

पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिर: । यत्र यत्र स्मरेद् विद्वान् पितॄणां दत्तमक्षयम् ।।
श्राद्धभूमौ गयां ध्वात्वा तथा देवं गदाधरम् । उभाभ्यां च नमस्कृत्य तत: श्राद्धं समारभेत् ।।
गयागयो गयादित्यो गायत्री च गदाधर: । गया गयासुरश्चैव षड् गया मोक्षदायका: ।।

ईशानविष्णुकमलासनकार्तिकेय, वह्नित्रयार्करजनीशगणेश्वराणाम् ।
क्रौञ्चामरेन्द्रकलशोद्भवकश्यपानां, पादान्नमामि सततं पितृमुक्तिहेतो: ।।

ॐ गयायै नम:। ॐ गदाधराय नम:।।[७४]

दिग्बन्धनम् अपसव्येन नीवीबन्धनं च---तिलसहितमोटकमादाय तिलान् पूर्वा—दिक्रमेण वक्ष्यमाणमन्त्रैर्विकिरेत्। ॐ अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम्।। ॐ अपहताऽअसुरा रक्षाᳬंसि व्वेदिषदः। बर्हिषदः पान्तु याम्यां ये पितरः स्थिताः। ॐ अपहताऽअसुरारक्षाᳬं सि व्वेदिषदः। प्रतीचीमाज्यपाः ॐ अपहताऽअसुरा रक्षाᳬं सि व्वेदिषदः। उदीचीमपि सोमपाः ॐ अपहताऽअसुरा रक्षाᳬंसि व्वेदिषदः।

ॐ ऊर्ध्वतस्त्वर्यमा रक्षेत् कव्यवाडनलोऽप्यधः ।
रक्षोभूतपिशाचेभ्यस्तथैवाऽसुरदोषतः ।।
सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे ।
सर्वतो विकीर्य पुष्पसहितं मोटकं वामकट्यां धारयेत् ।।

---

७४. अब सव्य भएर कर्मपात्रको तीन टुक्रा कुश लिई 'ॐ अपवित्रः०' पढेर श्राद्धस्थान र आफ्नू देहमा छर्किई संकल्प गर्नू। अनि 'ॐ देवताभ्यः०' 'ॐ सप्त व्याधा०' देखि 'पितृन्हुं कहोतोः' सम्मका सबै मन्त्रहरू पढ़िलिनू र 'ॐ गयायै नमः०, गदाधराय नमः' भन्नू ।

नीवी कार्या दशागुप्तिर्वामकुक्षौ कुशैः सह ॥ ब्राह्मः ॥

ॐ निहन्मि सर्वं यदमेध्यवद् भवेत्, हताश्च सर्वेऽसुरदानवा मया ।
रक्षांसि यक्षाः सपिशाचगुह्यका, हता मया यातुधानाश्च सर्वे ॥

*पुनः कुशखण्डत्रयमादाय—*

प्रयान्तु दूरतः सर्वे दैत्येया दानवास्तथा ।
सर्वविघ्नोपशान्त्यर्थं क्षिपामि च कुशाँस्तिलान् ॥

*दक्षिणस्यां क्षिपेत्। ततः सव्येन विष्णुस्मरणम्—*

ॐ नमो नमस्ते गोविन्द पुराण पुरुषोत्तम ।
इदं श्रादं हृषीकेश रक्षतात् सर्वतो दिशः ॥[७५]

---

७५. अनि दिग्बन्धन र नीवी बन्धनका लागि तिलसहित मोटक लिनू र पूर्वादि क्रमले मन्त्र पढ्दै तिल छर्कनू। अनि मोटक चाहिँ बायाँतिर कम्मरमा घुसार्दा— 'ॐ निहन्मि०' मन्त्र पढ्नुपर्दछ। अनि तीन टुक्रा कुश र तिल लिएर 'ॐ प्रयान्तु०' मन्त्र पढी दाक्षिणतिर फालिदिनू।

आसनम्। कुशादीन्यादाय— ॐ अद्येहाऽमुकगोत्राणा ऽस्मत्पितृपितामहप्रपिता—महानाममुकाऽमुकाऽमुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिनां विश्वेषां देवानां पुरूरवोमाद्रवोनाम्नामद्यकर्त्तव्यसांवत्सरिकैकपार्वणश्राद्धे, इदं कौशमासनं वः स्वाहा।। ततोऽपसव्यं कृत्वा मोटकमादाय— ॐ अद्येहाऽमुकगोत्राणामस्मत्पितृपितामह—प्रपितामहानाममुकाऽमुकामुकशर्मणां सपत्नीकानां वसुरुद्राऽऽदित्यस्वरूपाणामद्यकर्त्तव्य—सांवत्सरिकैकपार्वणश्राद्धे इदं मोटकरूपमासनं त्रेधा विभज्य युष्मभ्यं स्वधा।। ततः सव्येनाऽञ्जलिं बध्वा विश्वान् देवानावाहयेत्। यवाँश्चादाय— ॐ अद्येहाऽमुकगोत्राणाम—स्मत्पितृपितामह—प्रपितामहानाममुकाऽमुकाऽमुकशर्मणां सपत्नीकानां वसुरुद्रादित्य—स्वरूपाणां श्राद्धसम्बन्धिनो विश्वान् देवान् पुरूरवोमाद्रवो नाम्नः अद्य कर्तव्यसांवत्सरिकैक—पार्वणश्राद्धे, आवाहयिष्ये। 'ॐ आवाहय' इत्यनुज्ञाते— 'ॐ विश्वेदेवासऽआगतश्रृणुताम—ऽइमंꣳ हवम् । एदम्बर्हिषि निषीदत ।।

ॐ आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ।
ये यत्र विहिता श्राद्धे सावधाना भवन्तु मे ।।

आवाहयेत्। ततोऽपसव्येनाऽञ्जलिं बध्वा पितॄनावाहयेत्।। तिलमादाय– ॐ अद्येहाऽमुकगोत्रान्, अस्मत्पितृ–पितामह–प्रपितामहान्, अमुकाऽमुकाऽमुकशर्मणः सपत्नीकान् वसुरुद्राऽऽदित्यस्वरूपानद्यकर्तव्यसांवत्सरिकैकपार्वणश्राद्धे आवाहयिष्ये। 'ॐ आवाहय' इति अनुज्ञाते– उशन्तस्त्वानिधीमह्युशन्तः समिधीमहि। उशन्नुशतऽआवहपितॄन् हविषेऽअत्तवे।। आवाह्य, ॐ अपहताऽअसुरा रक्षाᳬं सि व्वेदिषदः।। इति तिलान् विकीर्य, ॐ आयन्तु नः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः। अस्मिन् यज्ञे स्वधयामदन्तोधिब्रुवन्तु ते वन्त्वस्मान् ।।[७६]

७६. आसनमा बसी कुश लिएर सव्य भई संकल्प पढी विश्वेदेवलाई आसन दिनू। अनि अपसव्य भएर मोटक लिई संकल्प गरी पितृब्राह्मणलाई पनि आसन दिनू। अनि सव्य भएर हात जोरी रित्तो हातले संकल्प गरेर विश्वेदेवमा जौ चढाइदिनू र 'ॐ विश्वेदेवा०' मन्त्र पढिलिनू, अनि अपसव्य भएर पितृ–ब्राह्मणलाई पनि रित्तो हातले संकल्प गर्नू र 'ॐ उशन्तस्त्वा०' पढेर तिल चढाइदिनू। अनि 'ॐ अपहता०' 'ॐ आयन्तु नः०' पढ्नुपर्दछ।

हस्तार्घपात्रम्— सव्येन विश्वेदेवब्राह्मणं पृच्छेत्— 'ॐ हस्तार्घपात्रमहं करिष्ये।' 'ॐ कुरुष्व' इति अनुज्ञात: सन्, पुटकमेकमग्रे कृत्वा पवित्रं क्षिपेत् — ॐ पवित्रेस्थो वेष्णव्यौ सवितुर्व: प्रसवऽउत्पुनाम्यच्छिद्रेण सूर्य्यस्य रश्मिभि:।। जलम्— ॐ शन्नो— देवीरभीष्टयऽआपोभवन्तुपीतये। शंय्योरभिस्स्रवन्तु न:।। यवान्— ॐ यवोसि य— वयास्मद्द्वेषोयवयाराती:।। गन्धम्— ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टांकरीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्।। पुष्पम्— ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वे नक्षत्राणिरूपमश्विनौव्यात्तम्। इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण।। 'ॐ हस्तार्घपात्रम् सम्पन्नम्' 'ॐ सुसम्पन्नम्' ॐ हस्तार्घपात्रमुत्थापयामि, 'ॐ उत्थापयस्व' इति अनुज्ञात: सन् हस्तार्घपात्रं वामहस्ते कृत्वा पुष्पसहितं पवित्रं गृहीत्वा, 'ॐ नमो नारायणाय' विप्रकरे पुष्पसहितं पूर्वाग्रं पवित्रं धृत्वा दक्षिणकरेण पुटकमुखं पिधाय 'ॐ या दिव्याऽआप:पयसासम्बभूवुर्याऽअन्तरिक्षाऽउतपार्थवीर्या:। हिरण्यवर्णायज्ञियास्तानऽआप: शिवा:सꣳ स्योनासुहवा भवन्तु।। अर्घपात्रस्थं जलमभिमन्त्र्य कुशयवजलान्यादाय— 'ॐ

अद्येहाऽमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाममुकाऽमुकाऽमुकशर्मणां सपत्नीकानां वसुरुद्राऽऽदित्यस्वरूपाणां श्राद्धसम्बन्धिनो विश्वेदेवा: पुरूरवोमाद्रवो नामान:, अद्यकर्त्तव्यसांवत्सरिकैकपार्वणश्राद्धे एष हस्तार्घो व: स्वाहा।। ब्राह्मणकरेऽर्घ्यं दद्यात्। 'अर्घे पुन: प्रत्यर्घमस्तु' विप्रकरस्थं सपुष्पं पवित्रमर्घपात्रे धृत्वा तदर्घपात्रं भूमौ धृत्वा, अर्घपात्रस्थजलेन 'ॐ तच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत्। पश्येम शरद: शतं जीवेम– शरद: शतꣳ शृणुयामशरद:शतंप्रब्रवाम शरद: शतमदीना: स्याम शरद: शतम्भूयश्च शरद: शतात्। चक्षु: स्पर्श: कार्य:। ततो 'विश्वेभ्यो देवेभ्य: स्थानमसीति' विश्वेदेवदक्षिणपार्श्वे उत्तानं तदर्घपात्रं स्थापयेत्।।[७७]

---

७७. अब सव्य भएर विश्वेदेवलाई प्रश्नोत्तर गरी हस्तार्घपात्रका लागि एउटा दुनामा पवित्र, जल, जौ, चन्दन, फूल सबैका मन्त्रहरू पढेर राख्नू। फेरि प्रश्नोत्तर गरेर दुना बायाँ हातमा लिनू र फूल–पवित्र ब्राह्मणमा घुमाएर 'ॐ नमो नारायणाय' भन्नू। अनि कुश–जौ लिएर संकल्प गर्नू र अलिकति जल ब्राह्मणमा चढाइदिनू। अनि अर्घ चढाएको फूल–पवित्र फेरि दुनामै राख्नू र दुनाको जलले 'ॐ तच्चक्षु०' मन्त्र पढेर आँखामा लगाउनू। अनि 'ॐ विश्वेभ्यो देवेभ्य:०' भनी ब्राह्मणको दाहिनेतिर उत्तानै राखिदिनू।

ततोऽपसव्येन— 'ॐ हस्तार्घपात्राण्यहं करिष्ये' ब्राह्मणं पृच्छेत्। 'ॐ कुरुष्व' इति तेनोक्ते पित्रादित्रिभ्यः स्वाग्रे पुटकत्रयमासाद्य तेषु उत्तराग्राणि पवित्राणि धृत्वा— 'ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्व्वः प्रसवऽउत्पुनाम्यच्छिद्रेण सूर्य्यस्य रश्मिभिः।। जलम्— ॐ शन्नोदेवीरभीष्टयऽआपोभवन्तु पीतये। शंय्योरभिस्रवन्तु नः।। तिलान्— ॐ तिलोसिसोमदैवत्यो गोसवोदेवनिर्मितः। प्रत्नमद्भिः पृक्तः स्वधया पितॄन् लोकान् पृणाहि नः स्वाहा।। गन्धम्— ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्।। पुष्पम्— 'ॐ श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि— रूपमश्विनौ व्यात्तम्। इष्णन्निषाणाम्मुम्मऽइषाणसर्वलोकम्मऽइषाण' इति प्रक्षिप्य। 'ॐ हस्तार्घपात्राणि सम्पन्नानि' इति पितृब्राह्मणं पृच्छेत्। 'ॐ सुसम्पन्नानि' प्रत्युक्ते— 'ॐ हस्तार्घपात्राण्युत्थापयामि' 'ॐ उत्थापयस्व' प्रत्युक्ते प्रथमं पित्र्यर्घपात्रं वामहस्ते धृत्वा 'ॐ नमो नारायणाय' पितृतीर्थेन विप्रकरे, उत्तराग्रं पवित्रं धृत्वा, अधोमुखेन दक्षिणकरेण हस्तार्घपात्रमुखं पिधाय, 'ॐ या दिव्याऽआपः पयसासम्बभूवुर्य्याऽअन्तरिक्षाऽउत पार्थिवीर्याः।

हिरण्यवर्णाश्चशियास्तानऽआप: शिवासꣳ स्योनासुहवा भवन्तु। तज्जलमभिमन्त्र्य तिलजलमोटकमादाय, 'ॐ अद्येहाऽमुकगोत्राऽस्मत्पितरमुकशर्मन् सपत्नीकवसुस्वरूपाद्य— कर्तव्यसांवत्सरिकैकपार्वणश्राद्धे एष हस्तार्घस्ते स्वधा' ब्राह्मणकरे अर्घं दद्यात्। 'अर्घे पुन: प्रत्यर्घमस्तु' ब्राह्मणकरस्थं पवित्रमर्घपात्रे निधाय तं भूमौ स्थापयेत्।। एवं पितामहप्रपितामहाभ्यामपि दत्त्वा प्रपितामहपात्रस्थजलादिकं पितामहार्घपात्रे कृत्वा तदुभयं पित्रर्घपात्रे कृत्वा पुन: पित्रर्घपात्रं पितामहार्घपात्रे कृत्वा तदुभयं प्रपितामहार्घपात्रोपरि धृत्वा। सव्यं कृत्वा तत्रस्थ— जलेन 'ॐ तच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत्। पश्येम शरद: शतञ्जवेम शरद: शतꣳश्रृणुयामशरद: शतं प्रब्रवाम शरद: शतमदीना: स्याम शरद: शतम्भूयश्च शरद: शतात्। चक्षु:स्पर्श: कार्य:। ततोऽपसव्येन पितृद्विजस्य वामभागे 'ॐ पितृभ्य: स्थानमसी' ति न्युब्जं कृत्वा तदुपरि कुशत्रयं दद्यात्।।[७८]

७८. अनि अपसव्य भएर पितृब्राह्मणसित प्रश्नोत्तर गरी ब्राह्मणको अगाडि तीनोटा दुना राख्नू र त्यसमा उत्तराग्र पारी पवित्र राख्दा 'ॐ पवित्रेस्थो०' मन्त्र पढ्नू। अनि जल, तिल, चन्दन, फूल पनि मूल

सव्येन– 'ॐ अर्चयिष्ये' विश्वेदेवब्राह्मणं पृच्छेत्। 'ॐ अर्चय' इति तेनोक्ते 'अत्र गन्ध–पुष्पाक्षत–धूप–दीप–द्रव्य–ताम्बूल–यज्ञोपवीत–वस्त्रादिभिरभ्यर्च्य ब्राह्मणाय तिलकं दत्त्वा धूपदीपौ च कारयेत्। ततः कुशादिकमादाय– ॐ अद्येहाऽमुकगोत्राणाम–स्मत्पितृ– पितामह–प्रपितामहानाममुकाऽमुकाऽमुकशर्मणां सपत्नीकानां वसुरुद्रा–दित्यस्वरूपाणां श्राद्धसम्बन्धिनो विश्वेदेवाः पुरूरवो माद्रवो नामान एतान्यर्चनानि, अत्र गन्धपुष्पाक्षत–धूपदीपनैवेद्यताम्बूलयज्ञोपवीतद्रव्यवासांसि वः स्वाहा। इति उत्सृजेत्।।[७९]

अनुसार मन्त्र पढेर राख्नू। फेरि प्रश्नोत्तर गरेर पहिलो पितृको दुना (अर्घ) बायाँ हातमा लिनू 'ॐ नमो नारायणाय' भनी पितृतीर्थले ब्राह्मणमा फूल पवित्र राखिदिनू। अनि दाहिने हातले शिर निहुराई अर्घपात्रलाई 'ॐ या दिव्या०' मन्त्र पढेर छोप्नू। अनि मोटक लिएर संकल्प गरी अलिकति जल ब्राह्मणमा चढाइदिनू। यही क्रमले अरू पितामह र प्रपितामहलाई पनि अर्घ दिनू। अनि प्रपितामहको पात्रमा पितामहको पात्र खन्याउनू र पितामहको पात्रमा पितृको अर्घ्य खन्याउनू। अनि यथाक्रम खप्टेर ब्राह्मणको सामुन्ने राख्नू। अनि सव्य भएर 'ॐ तच्चक्षु०' मन्त्र पढी आँखामा जल लगाउनू र अपसव्य भएर 'ॐ पितृभ्य:०' भनी ब्राह्मणको पछाडि घोप्ट्याइदिनू र त्यसमाथि तीन टुक्रा कुश राखिदिनू।

७९. अनि सव्य भएर पूजाको प्रश्नोत्तर गरी चन्दन, फूल, अक्षता, द्रव्य, पान, जनै र वस्त्रादिले पूजा तथा धूप, दीप, नैवेद्य गरी कुश लिएर संकल्प गरिलिनू।

ततोऽपसव्येन पितृब्राह्मणं पृच्छेत्– 'ॐ अर्चयिष्ये' 'ॐ अर्चय' इत्युक्ते गन्धादिभिरभ्यर्च्य ब्राह्मणाय तिलकं कृत्वा धूपदीपौ च कारयेत्। मोटकादिकमादाय– 'ॐ अद्येहाऽमुकगोत्रा अस्मत्पितृपितामहप्रपितामहा अमुकाऽमुकाऽमुकशर्माणः सपत्नीकाः वसुरुद्राऽऽदित्यस्वरूपा एतान्यर्चनानि, अत्र गन्धपुष्पाऽक्षतधूपदीपनैवेद्यताम्बूल–यज्ञोपवीतोपायनवासांसि त्रेधा विभज्य युष्मभ्यं स्वधा। इति उत्सृजेत्॥ सव्येन विश्वेदेवब्राह्मणहस्ते 'ॐ अर्चनविधेः सर्वं परिपूर्णमस्तु' जलं दद्यात्। 'ॐ अस्तु' तेनोक्ते सव्येनैव विश्वेदेवब्राह्मणभोजनस्थाने चतुर्दिक्षु,

यथा चक्राऽऽयुधो विष्णुस्त्रैलोक्यं परिरक्षति ।
एवं मण्डलभस्मैतत् सर्वभूतानि रक्षतु ॥

जलेन भस्मना वा आसनसहितं चतुष्कोणं मण्डलं विधाय, अपसव्येन पितृब्राह्मणहस्ते 'ॐ अर्चनविधेः सर्वं परिपूर्णमस्तु' इति जलं दद्यात्॥ 'ॐ अस्तु' प्रतिवचनम्॥ ततःपितृब्राह्मणभोजनस्थाने चतुर्दिक्षु, आसनसहितं चतुष्कोणमण्डलं पूर्वोक्तमन्त्रेण

कुर्यात्, इति ब्राह्मण–पूजनम् ॥[८०]

अग्नौकरणम्– छन्दोगा जुहुयुः सव्येनाऽपसव्येन याजुषाः।– वृद्धयाज्ञवल्क्यः॥ अपसव्येन दक्षिणाऽभिमुखो भूत्वा वामजानु पातयित्वा पुटकादौ सघृतमन्नं कृत्वा, 'ॐ अग्नौकरणमहं करिष्ये' पितृब्राह्मणं पृच्छेत्। 'ॐ कुरुष्व' इत्यनुज्ञातः सन् पितृब्राह्मणकरे जलपात्रे वा जुहुयात्। 'ॐ अग्नये कव्यवाहनाय स्वाहा। इदमग्नये कव्यवाहनाय।' इति त्यागः॥ 'ॐ सोमाय पितृमते स्वाहा इदं सोमाय पितृमते।' हुतशेषमन्नं सव्येन विश्वेदेवपात्रोपरि क्षिपेत्, अपसव्येन पितृब्राह्मणभोजनपात्रे प्रक्षिपेत्॥[८१]

८०. अनि अपसव्य भएर पितृ–ब्राह्मणसित प्रश्नोत्तर गरी चन्दन, अक्षता, तिल आदि लिएर संकल्प गरिलिनू। अनि सव्य भएर विश्वेदेवलाई 'ॐ अर्चन०' पढेर जल चढाउनू। अनि सव्यले नै विश्वेदेवको भोजन–स्थानमा चारपाटे मण्डल (वेदी) भस्म वा जलले बनाउनू र 'ॐ यथा चक्रायुधो०' मन्त्र पढिलिनू। अनि अपसव्य भएर 'ॐ अर्चनविधेः०' पढेर जल चढाउनू र पितृब्राह्मणको भोजन–स्थानमा पनि चारपाटे मण्डल बनाउनू॥

८१. अग्नौकरणम् गर्दा अपसव्य भए बायाँ घुँडा मोरी हातमा कुश राखेर त्यसमाथि घिउ र

अथ भूस्वामी – तिलघृतमधुजलयुतमन्नं मोटकादिसहितमादाय दक्षिणाभिमुखो भूत्वा– 'ॐ इदमन्नं सजलमेतद्भूस्वामिपितृभ्यो नमः' इत्युत्सृजेत्।।[८२]

अन्नसङ्कल्पः – ततः सव्यं कृत्वा विश्वान् देवान् ध्यायन् सोपस्करं यवजलयुतमन्नमुपनीय मधुनाऽभिघार्य, ऋजुहस्ताभ्यामन्नपात्रमालभ्य– 'ॐ पृथिवी ते पात्रंद्यौरपिधानंब्राह्मणस्यमुखेऽअमृतेऽ अमृतं जुहोमि स्वाहा।। 'ॐ इदंविष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपा ँ सुरे स्वाहा ।। ॐ कृष्णकव्यमिदंरक्षमदीयम् 'ॐ इदमन्नम्' ०ॐ इमा आपः, 'ॐ इदं हविः' एतान्युपकरणानि, क्रमेणान्नजलघृतेषु विप्रदक्षिणाङ्गुष्ठं निवेश्य–'ॐ यवोसियवयास्मद्द्वेषोयवयारातीः'।। यवान्, अन्नोपरितो विकीर्य

चामल राखी भूमिमा दुनापा जल राखेर त्यही जलमा 'ॐ अग्नये०' पढेर पहिलो आहुति र 'ॐ सोमाय०' पढेर दोस्रो आहुति दिनू। अनि सव्य भएर हातको शेष अलिकति विश्वेदेवमा र अपसव्य भएर अलिकति पितृ–ब्राह्मणमा चढाइदिनू।

८२. एक भाग सिधा राखेर तिल, घृत, मधु, जल गरी मोटक लिएर 'ॐ' इदमन्नं० पढी भूस्वामीलाई दिनू ।

कुशयवजलान्यादाय वामहस्ताङ्गुष्ठाङ्गुलिभिः क्रमेणान्नमपश्च स्पृष्ट्वा 'ॐ अद्येहा–ऽमुकगोत्राणामस्मत्पितृ–पितामह–प्रपितामहानाममुकाऽमुकाऽमुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां श्राद्धसम्बन्धिभ्यो विश्वेभ्यो देवेभ्यः पुरूरवोमाद्रवोनामभ्यः, अद्यकर्तव्यसांवत्सरिकैकपार्वणश्राद्धे, इदमन्नं सजलं सोपस्करं परिविष्टं परिवेक्ष्यमाणं चाऽऽक्षय्यतृप्तिहेतोर्वः स्वाहा' इति ब्राह्मणकरे कुशादिकमुत्सृजेत् ।।[८३]

ततोऽपसव्येन सोपस्करं तिलजलयुतमन्नमुपनीय मधुनाऽभिघार्य, अधोमुखाभ्यां व्यस्ताभ्यां पाणिभ्यामन्नपात्रमालभ्य– 'ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽअमृतेऽअमृतं जुहोमि।' 'ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमास्यपाꣳसुरे

८३. अन्न–संकल्पमा सव्य भएर विश्वदेवको सामुन्ने सिधा राखी जौ, जल, मह राखेर रित्तो हातले 'ॐ पृथिवी० ॐ कृष्ण कव्य०' दुई मन्त्र पढी प्रश्नोत्तर गरी 'ॐ यवोसि०' मन्त्र पढेर सिधाको वरिपरि जौ छर्किदिनू । अनि कुश जल लिएर संकल्प गर्दा बायाँ हातको बूढी औंला र चोर औंलाले अन्नमा जलमा छर्नुपर्दछ ।।

स्वाहा।। 'ॐ इदमन्नम्' 'ॐ इमा आपः' 'ॐ इदमाज्यं' 'ॐ इदं हविः' एतान्युपकरणानि, क्रमेणान्नजलघृतेषु विप्रदक्षिणाङ्गुष्ठं निवेश्य— 'ॐ अपहताऽअसुरारक्षा ᳪसि व्वेदिषदः' अन्नं परितः तिलान्[1] विकीर्य। मोटकादीन्यादाय वामहस्ताङ्गुष्ठाङ्गुलिभिः क्रमेणाऽन्नमपश्च स्पृष्ट्वा 'ॐ अद्येहाऽमुकगोत्रेभ्योऽस्मत्पितृपितामहप्रपितामहेभ्योऽमुकाऽमुकाऽमुकशर्मभ्यः सपत्नीकेभ्यो वसुरुद्रादित्यस्वरूपेभ्यः, इदमन्नं सजलं सोपस्करं परिविष्टं परिवेक्ष्यमाणं चाऽक्षय्यतृप्तिहेतोस्त्रेधा विभज्य युष्मभ्यं स्वधा ।।' ब्राह्मणसमीपे भूमौ मोटकादिक— मुत्सृजेत् ।।[८४]

(१) सर्वदा च तिला ग्राह्याः पितृकृत्ये विशेषतः। भोज्यपात्रे तिलान् दृष्ट्वा निराशाः पितरो गताः।। —पृथ्वीचन्द्रोदये पराशरः।

८४. अनि अपसव्य भएर सिधामा तिल जल मह छर्की शिर निहुराई घोप्टो हातले सिधा ढाकेर 'ॐ पृथिवी ते॰' ॐ इदं विष्णु॰ दुवै मन्त्र पढ़िलिनू— यो जल, यो अन्न, यो घृत इत्यादि मूल अनुसार भन्दै जानू । अनि ब्राह्मणको दाहिने हातको बूढीऔंलो छोएको भावना गरी 'ॐ अपहता॰' ले सिधाको वरिपरि तिल छर्किनू । अनि मोटक जल लिई बायाँ हातको बूढी र चोर औंलाले भूमिमा राखेको दुनामा र अन्नमा छोई संकल्प गरिलिनू ।।

ततः सव्येन देवब्राह्मणकरयोः 'भवान् प्राशयतु' इति अपोशानं दत्त्वा । अपसव्येन पितृब्राह्मणकरयोः 'भवान् प्राशयतु' दत्त्वा । सव्येन श्राद्धकर्ता कुशोपरि विशन्– 'ॐ मधुव्वाताऋतायतेमधुक्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥ मधुनक्तमुतोषसो मधुमत्पार्थिवꣳरजः। मधुद्यौरस्तुनः पिता ॥ मधुमान्नो वनस्पतिर्मधुमाँऽ२॥ अस्तु सूर्य्यः माध्वीर्गावो भवन्तु नः ॥ ॐ मधु मधु मधु ॥

अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् ।
तत्सर्वमच्छिद्रमस्तु भास्करस्य प्रसादतः ॥
ॐ नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे ।
नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ॥

'यथासुखं जुषध्वम्' इति वचनानन्तरं ते ब्राह्मणा मौनिनो भूत्वा भुञ्जीरन्। हस्तसंज्ञया च भक्ष्यं प्रार्थयेयुः ॥[८५]

८५. अनि सव्य भएर विश्वेदेवलाई 'भवान् प्रशयतु' भनेर जल दिनू । अपसव्य भएर पितृ ब्राह्मणलाई पनि 'भवान्०' भनी जल दिनू । अनि सव्य भएर कर्ताले यौटा लामो कुश आसन–मुनि

ततः सप्रणवव्याहृतिकां गायत्रीं जपित्वा मधुव्वातेति ऋचश्च पठित्वा पितृसूक्तं च पठेत् । ब्राह्मणान् यत्र–यत्रेच्छोपलभ्यते तत्तत्प्रयच्छन् मन्दं मन्दं भोजयेत् ॥[८६]

अथ विकिरासनम्॥ पितामहान्नपात्रसन्निधौ, नैर्ऋत्यदिशि आस्तृतदक्षिणाग्रकुशत्रयायां भूमौ विकिरासनम् । अपसव्येन मोटकादीन्यादाय–

असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् ।
उच्छिष्टभागधेयानां दर्भेषु विकिरासनम् ॥

आस्तृतकुशोपरि मोटकमुत्सृजेत् ॥ सतिलघृतमन्नमादाय जलेनाऽऽप्लाव्य मोटकञ्चाऽऽदाय–

'अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥

---

राख्नू र 'ॐ मधु व्वाता०' तीन मन्त्र पढी तीनपल्ट मधु मधु मधु भन्नू र 'ॐ अन्नहीन' र 'ॐ नमस्तुभ्यम्०' दुवै मन्त्र पढिलिनू । अनि ब्राह्मणहरूले नबोलीकन भोजन गर्नू॥

८६. अब कर्ताले प्रणवसहित गायत्री जप गरेर 'ॐ मधुव्वाता०' तीन मन्त्र पढ्नू । सक्नेले पितृसूक्त र रामगीता सक्नेले पाठ गराउनू । पितृसूक्त र रामगीता यही पुस्तकमा पुछारमा छापिएको छ ॥

आस्तृतकुशोपरि तदन्नं विकिरेत् । ततः कुशान् परित्यज्य हस्तौ पादौ प्रक्षाल्य सव्येन द्विराचम्य गायत्रीं त्रिर् जपित्वा 'ॐ मधुव्वाता ऋतायते मधुक्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ।। मधुनक्तमुतोषसोमधुमत्पार्थिव ३ रजः । मधुद्यौरस्तु नः पिता। मधुमान्नोवनस्पतिर्मधुमाँऽ२।। अस्तु सूर्य्यः । माध्वीर्गावो भवन्तु नः ।। ब्राह्मणान् तृप्तान् ज्ञात्वा–'ॐ जलगण्डूषमिदं ते' विश्वेदेवब्राह्मणाय प्रत्यपोशानं दद्यात् । विश्वेदेवं प्रतिप्रश्नः 'ॐ तृप्ताःस्थ' 'ॐ तृप्ताः स्मः'– प्रतिवचनम् । 'ॐ शेषमन्नं किं क्रियताम् ?' 'ॐ इष्टैः सह भुज्यताम्' प्रतिवचनम्। 'ॐ पिण्डदानमहं करिष्ये।' 'ॐ कुरुष्व ।' अपसव्येन–'ॐ जलगण्डूषमिदं ते' पितृब्राह्मणाय प्रत्यपोशानं दद्यात् ।। अञ्जलिं बध्वा पितृब्राह्मणं प्रति प्रश्नः– 'ॐ तृप्ताः स्थ ?' 'ॐ तृप्ताः स्मः।' 'शेषमन्नं कि क्रियताम्?' 'ॐ इष्टैः सह भुज्यताम्'–प्रतिवचनम् ।।[८७]

८७. अब पितामहको अन्नपात्र नगीचै नैर्ऋत्यतिर तीन टुक्रा कुश राखेर मोटक लिई 'ॐ असंस्कृत०' पढेर कुशमाथि मोटक राखिदिनू ।अनि विकर लिएर तिल, घिउ, जल हाली मोटक लिएर– 'ॐ अनिदग्धाश्च०' पढेर मोटकमाथि घोप्टाइदिनू । अनि कुशको औंठी फालिदिनू, हात पाउ धुनू र सव्य भएर द्विराचमन गरी

पिण्डदानम्— 'ॐ पिण्डदानमहं करिष्ये'— पृच्छेत् । 'ॐ कुरुष्व'—प्रतिवचनम्। ततः पिण्डदानार्थं हस्तमितां चतुरङ्गुलोच्छ्रितां सैकतादिकां दक्षिणप्लवां पिण्डिकां निर्माय ततः पिण्डिकामध्ये वामेन पाणिना दर्भपिञ्जुलीं गृहीत्वा दक्षिणहस्ते कृत्वा सव्योपगृहीतदक्षिणपाणिना, 'ॐ अपहताऽअसुरा रक्षा ᳪसि वेदिषदः' दक्षिणाग्ररेखाद्वयं कृत्वा दर्भपिञ्जुलीमुत्तरस्यां क्षिपेत् । 'ॐ ये रूपाणि प्रतिमुञ्चमानाऽअसुराः सन्तः स्वधया चरन्ति। परापुरोनिपुरोयेभरन्त्यग्निष्टाँल्लोकान् प्रणुदात्यस्मात्।' अङ्गारं भ्रामयित्वा दक्षिणस्यां क्षिपेत् ॥ जलेन— 'ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये । शंय्योरभिस्रवन्तु नः॥' पिण्डिकासेचनं तदनुछिन्नमूलकुशान् पिण्डिकायां दद्यात्।।८८

गायत्री जप्नू र ॐ मधुव्वाता०' तीन मन्त्र पढिलिनू अनि ब्राह्मणहरू अघाए भन्ने भावना गरेर प्रश्नोत्तरी पहिले विश्वेदेवतिर र अपसव्य भएर पितृब्राह्मणतिर पनि गर्नुपर्दछ । 'ॐ शेषमन्नं' पढेर पिण्डदानको आज्ञा लिनुपर्दछ।।

८८. अब पिण्डदानको लागि एक हात चाक्लो र चार अङ्गुल अग्लो तथा दक्षिणतिर भिरालो परेको बालुवाको वेदी बनाउनू । त्यस पिण्डिकामा कुशका टुक्राले दुई धर्का आफूतिर तान्नू र कुश आफूतिर राख्नू । अनि 'ॐ ये रूपाणि०' मन्त्र पढ्दै वेदीमा फिलिङ्गो कुशले घुमाउनू र फिलिङ्गो दक्षिणतिर कुश आफूतिर राख्नू । अनि कर्मपात्रको जल पिण्डिकामा छर्कनू र 'ॐ शन्नोदेवी०' मन्त्र पढ्नू । अनि लामा कुश पिण्डिकामा बिछाउनू।।

तत: सव्येन–

देवताभ्य: पितृभ्यश्च महायोगिभ्य एव च ।
नम: स्वाहायै स्वधायै नित्यमेव नमो नम:।। त्रि:=(तीनपल्ट पढ्नू ।।)

अपसव्यं कृत्वा, एकं पुटकं वामहस्ते कृत्वा मोटकमादाय– 'ॐ अद्येहाऽमुकगोत्रास्मत्पितरमुकशर्मन् सपत्नीक वसुस्वरूपाऽद्य एकपार्वणश्राद्धे पिण्डस्थाने, अत्राऽ वने निक्ष्व ते स्वधा' छिन्नमूलकुशोपरि, अवनेजनं दद्यात्। एवं पितामहप्रपितामहाभ्यां दद्यात्। तत: पिण्डान् निर्माय मोटकादीनि प्रथमपिण्डं चाऽऽदाय वामहस्तेन पुटकादिस्थजलमादाय– 'ॐ अद्येहाऽमुकगोत्राऽस्मत्पितरमुकशर्मन् वसुस्वरूप, अद्य, एकपार्वणश्राद्धे, एष पिण्डोऽमृतस्वरूपोऽक्षय्यतृप्तिहेतोस्ते स्वधा'– अवनेजनोपरि पिण्डं दद्यात्। एवं पितामह–प्रपितामहाभ्यां दद्यात्।।[८९]

८९. अब सव्य भएर 'ॐ अपवित्र:०' तीनपल्ट पढ्नू र अपसव्य भएर मोटक र जल लिई वेदिकामा मोटक राख्दा संकल्प पढ्नू। यही क्रमले पितामह प्रपितामहलाई पनि आसन दिनू। अनि मोटक र जल लिई प्रथम पिण्ड लिई संकल्प गरेर आसनमा पितृतीर्थले (चोर र बूढ़ीको बीच) राख्नू। यही क्रमले पितामह र प्रपितामहलाई पनि पिण्ड दिनुपर्दछ। अन्य पितृहरूलाई पनि आसन–अनुसार पिण्डदान गर्नुपर्दछ।।

ततः, आस्तृतकुशमूलेन— 'ॐ लेपभागभुजस्तृप्यन्तु।' करं प्रोक्ष्य सव्यं कृत्वा द्विराचम्य हरिं स्मरेत्। ततः सव्येनैव पुष्पादीन्यादाय पित्रादीनुदिश्य— 'ॐ अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्' सव्यपार्श्वेन, उत्तराभिमुखः पठेत्। श्वासं नियम्य भास्करमूर्तिं पितॄन् ध्यायन्, अपसव्यं कृत्वा दक्षिणाऽऽवर्तेन दक्षिणाऽभिमुखो भूत्वा— 'ॐ अमीमदन्तपितरोयथाभागमावृषायिषत' पुष्पादिकानि पिण्डेषु निक्षिपेत्। ततोऽवनेजनपात्रं वामहस्ते कृत्वा मोटकमादाय— 'ॐ अद्याऽऽमुकगोत्राऽस्मत्पितरमुकशर्मन्, अद्य, एकपार्वणश्राद्धे, इदं पिण्डप्रत्यवनेजनं ते स्वधा।' एवं त्रयः पिण्डेषु प्रत्यवनेजनम् दद्यात्।।[९०]

९०. बिछाएको कुशले हात पुछ्दा 'ॐ लेपभाग०' पढ्नू। अनि सव्य भएर दुइफेर आचमन गरी हरि—स्मरण गर्नू। अनि फूल—अक्षता लिएर पितृहरूको स्मरण गर्दै 'ॐ अत्र पितरो०' मन्त्र पढ्दै दाहिने तर्फबाट उत्तर फर्कनू र श्वास रोकी सूर्य्यरूपी पितृको ध्यान गरी अपसव्य भएर फेरि दाहिने तर्फबाट नै दक्षिण फर्की 'ॐ अमीमदन्त०' पढेर पिण्डमा त्यो फूल—अक्षता चढाइदिनू। अनि अपसव्य भएर मोटक जल लिई संकल्प पढ्दै सबै पिण्डमा प्रत्यवनेजन दिनू।।

ततो नीवीं विस्रंस्य सव्यं कृत्वाऽऽचम्य हरिं स्मरेत्। अपसव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणेनाऽऽदाय– 'ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्तसतो वः पितरो देष्मै तद्वः पितरो व्वासः।।' प्रत्येकं पिण्डोपरि सूत्रं दद्यात्। ततः क्रमेण पिण्डान् गन्धादिभिः संपूज्य धूपदीपौ च कारयेत्।। मोटकमादाय– 'ॐ अद्येहाऽमुकगोत्राः, अस्मत्पितृपितामहप्रपितामहाः, अमुकाऽमुकाऽमुकशर्माणः सपत्नीका वसुरुद्रादित्यस्वरूपाः, अद्य, एकपार्वणश्राद्धे एतानि पिण्डार्चनानि, अत्र गन्धसूत्रपुष्पाक्षतधूपदीपैक्षवादिनैवेद्यानि त्रेधा विभज्य युष्मभ्यं स्वधा' गन्धादिकमुत्सृजेत्।।[९१]

९१. अब अघि कम्मरमा घुसारेको वस्तु खसालिदिनू। अनि सव्य भएर आचमन गरी हरि–स्मरण (हरि–हरि–हरि, विष्णु–विष्णु–विष्णु) भन्नू। अनि अपसव्य भएर दुवै हातले काँचो धागो समाती 'ॐ नमोवः०' पढ्दै सबै पिण्डमा धागो चढाउनू। अनि प्रत्येक पिण्डलाई चन्दन, अक्षता, तिल, फूल, वस्त्र, धूप–दीप, नैवेद्य चढाएर पूजा गरी संकल्प गरिलिनू ।।

ततः सव्येन विश्वेदेवब्राह्मणकरयोः– 'ॐ शिवा आपः सन्तु'–जलम्, 'ॐ सौमनस्यमस्तु'– पुष्पम्, 'ॐ अक्षतं चारिष्टमस्तु'–तण्डुलान् प्रत्येकाय दद्यात्। अपसव्येन पितृब्राह्मणकरयोः– 'ॐ शिवा आपः सन्तु'–जलम्, 'ॐ सौमनस्यमस्तु'–पुष्पम्, 'ॐ अक्षतं चारिष्टमस्तु'–तण्डुलान् प्रत्येकाय दद्यात्। सव्येन पूर्वाभिमुखो भूत्वाऽञ्जलिं बध्वा,

अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् ।
ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवन्तु मे ॥
लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे ।
लक्ष्मीर्वसति गोष्ठेषु सौमनस्यं ददातु मे ॥
अक्षतं चाऽस्तु मे पुण्यं शान्तिः पुष्टिर्धृतिस्तथा ।
यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ॥[९२]

---

९२. अनि सव्य भएर विश्वेदेवमा 'ॐ शिवा आपः०' ले जल, 'ॐ सौमनस्यमस्तु' ले फूल र 'ॐ अक्षतं०' ले अक्षता चढाउनू। अनि सव्य भएर पितृब्राह्मणलाई पनि मन्त्र पढ्दै जल, फूल, अक्षता चढाउनू। अनि पूर्व फर्केर हात जोरी 'ॐ अपां मध्ये०' देखि 'सदा मम' सम्मका श्लोकहरू पढिलिनू॥

ततः कर्मपात्रोदकं कुशैर्गृहीत्वा प्रतिमन्त्रम् स्वशिरस्यभिषिञ्चेत्– 'ॐ अस्मत्–कुले दीर्घमायुरस्तु' 'ॐ शान्तिरस्तु' 'ॐ पुष्टिरस्तु' 'ॐ वृद्धिरस्तु' 'ॐ यच्छ्रेयस्तदस्तु।' 'यत्पापं तत्प्रतिहतमस्तु'–भूमौ। 'द्विपदेचतुष्पदेभ्यः शान्तिर्भवतु।' ततोऽपसव्येन पिण्डशेषान्नं पिण्डसमीपे विकिरेत्।। गङ्गाजलं वामहस्ते पुटकादौ गृहीत्वा मोटकमादाय– 'ॐ अद्याऽमुकगोत्रस्याऽस्मत्पितुरमुकशर्मणः, अत्र, एकपार्वणश्राद्धे दत्तैतदन्नपानादिकमक्षय्यमस्तु' पिण्डेऽक्षय्योदकं दद्यात्। सव्यम् कृत्वाऽञ्जलिम्बध्वा– 'ॐ अघोराः पितरः सन्तु' पिण्डोपरि पूर्वाग्रां जलधारां दद्यात्।।[९३]

आशिषप्रार्थना – सव्येनैव प्राङ्मुखोऽञ्जलिं बध्वा 'ॐ गोत्रन्नो वर्द्धताम्।' 'ॐ वर्द्धताम्'–प्रतिवचनम्। 'ॐ दातारो नोऽभिवर्धन्ताम्।' 'ॐ वर्द्धन्ताम्।' 'ॐ वेदाः

९३. अब कर्मपात्रको कुश लिएर आफ्नू शिरमा जल छर्कदा– 'ॐ अस्मत्कुले०' देखि 'यच्छ्रेयस्तदस्तु' सम्म पढ्नू र 'यत्पापं०'पढेर एकपल्ट भूमिमा छर्कनू। अनि अपसव्य भएर पिण्ड–शेष पिण्डको नगीचै राखिदिनू। अनि मोटक र जल लिएर संकल्प गरी प्रत्येक पिण्डमा अक्षय्योदक दिनू। अनि सव्य भएर पूर्वतिर धारा लगाई पिण्डमा जल चढाउँदा 'ॐ अघोराः०' पढ्नुपर्दछ।।

सन्ततिरेव च।' 'ॐ सन्तु।' 'ॐ श्रद्धा च नो माव्यगमत्।' 'ॐ मागात्।' 'ॐ बहुदेयं च नोऽस्तु।' 'ॐ अस्तु।' 'ॐ अन्नं च नो बहु भवेत्।' 'ॐ भवतु।' 'ॐ अतिथींश्च लभेमहि।' 'ॐ लभध्वम्।' 'ॐ याचितारश्च नः सन्तु।' 'ॐ सन्तु।' 'ॐ मा याचिष्म कञ्चन।' 'ॐ मा याचेथाः।' – प्रतिवचनम्॥

ततः श्राद्धकर्त्ता ब्राह्मणहस्तेन तिलकं कुर्यात्– 'ॐ यंकामंकामयतेसोऽस्मैकामः समृध्यताम्।' ततोऽपसव्येन सपवित्रान् कुशान् न्युब्जपात्रात् समादाय पिण्डोपरि निक्षिप्य 'ॐ स्वधां वाचयिष्ये।' 'ॐ वाच्यताम्' प्रतिवचनानन्तरं रिक्ताञ्जलिना– 'ॐ अद्याऽमुकगोत्रेभ्यः, अस्मत्पितृपितामहप्रपितामहेभ्यः, अमुकाऽमुकाऽमुकशर्मभ्यः सपत्नीकेभ्यो वसुरुद्रादित्य–स्वरूपेभ्यः, अत्र, एकपार्वणश्राद्धे 'ॐ स्वधोच्यताम्।' 'ॐ अस्तु स्वधा' प्रतिवचनम्॥[९४]

---

९४. अब सव्यले नै पूर्व फर्किई हात जोरेर आशीष–प्रार्थनाका प्रश्नोत्तर– 'ॐ गोत्रन्नो०' देखि 'मा याचेथाः' सम्म पढ्नू। अनि पुरोहितले– 'ॐ यं कामं' पढ्दै कर्तालाई टीका लगाइदिनू। अनि अपसव्य भएर अर्घपात्र–मुनिको फूल–पवित्र झिकेर पिण्डमा चढाउनू र सोध्नू– 'स्वधां वाचयिष्ये।' 'ॐ वाच्यताम्।' यति पढ्नु पर्दछ। अनि रित्तो हात देखाएर संकल्प पढी 'ॐ अस्तु स्वधा०' सम्म भन्नू॥

ततः पयसादिसहितं पुटकं वामहस्ते कृत्वा– 'ॐ उर्ज्जंवहन्तिरमृतम्पयः कीलालम्परिस्रुतम्। स्वधास्थतर्पयत मे पितॄन्। मन्त्रेण सपवित्र–कुशोपरि दक्षिणाग्रां पयोधारां दद्यात्। ततः 'ॐ पिण्डाः संपन्नाः' ब्राह्मणं पृच्छेत्। 'ॐ सुसम्पन्नाः' प्रतिवचनम्। 'ॐ पिण्डान् उत्थापयामि!' 'ॐ उत्थापयस्व' इत्यनुज्ञातः सन् नम्रीभूय सव्येन पिण्डान् आघ्राय अपसव्येनोत्थापयेत्। पिण्डाधारकुशानुल्मुकं च वह्नौ क्षिपेत्!

अथ वसन्तपूजनम्– सव्येन पिण्डिकायां शंखं चक्रं (७४) च लिखेत्–'ॐ शंखाय नमः।' 'ॐ चक्राय नमः' यवैः शंखचक्रपूजां विधाय, अपसव्यं कृत्वा –

ॐ गयायां पितृरूपेण स्वयमेव जनार्दनः।
तं दृष्ट्वा पुण्डरीकाक्षमुच्यते च ऋणत्रयात् ॥

पिण्डं पिण्डिकोपरि निधाय एभिर्मन्त्रैः पूजयेत्॥[९५]

९५. अब 'ॐ उर्ज्जं०' मन्त्र पढ्दै काँचो दूध तिल मिसाएर दक्षिणतिर धारो लगाई सबै पिण्डहरूमा चढाउनू। अनि ब्राह्मणसित प्रश्नोत्तर गरी बास्ना लिएर शिर निहुराई सव्य भएर पिण्ड उठाउनू। अपसव्य भएर भूमिमा राख्नू। अनि वेदीको कुश आगोमा हालिदिनू। अनि सव्य भएर पिण्डिकामा शंख–चक्र (७४) लेख्नू र जौले शंख–चक्रको पूजा गर्नू। अनि अपसव्य भएर– 'ॐ गयायां०' मन्त्र पढी पिण्डिकामा पिण्डको टपरी राखिदिनू ॥

सव्येन, 'ॐ वसन्ताय नमस्तुभ्यं ग्रीष्माय च नमो नमः ।
वर्षाभ्यश्च शरत्संज्ञ ऋतवे च नमो नमः ॥
हेमन्ताय नमस्तुभ्यं नमस्ते शिशिराय च ।
माससंवत्सरेभ्यश्च दिवसेभ्यो नमो नमः ॥

कर्पूरदीपं प्रज्वाल्य, सव्येनैव विश्वेदेवार्घपात्रं संचाल्य, अपसव्येन पित्रर्घपात्राण्युत्तानीकरणम्।

अथ दक्षिणासङ्कल्पः– सव्येन कुशयवजलदक्षिणाद्रव्याण्यादाय– 'ॐ अद्याऽमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाममुकाऽमुकाऽमुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां पुरूरवोमाद्रवोनाम्नामद्य कृतैतत् एकपार्वणश्राद्धे वैश्वदैविकश्राद्धप्रतिष्ठासिद्ध्यर्थं दक्षिणां हिरण्यमग्निदैवतं तन्मूल्योपकल्पितं द्रव्यं वा अमुकगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे। ब्राह्मणकरे उत्सृजेत्॥

सव्येनैव कुशतिलदक्षिणाद्रव्यमादाय– 'ॐ अद्याऽमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाममुकाऽमुकाऽमुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणामद्य

कृतैतत्सांवत्सरिकैकपार्वणश्राद्धप्रतिष्ठासिद्ध्यर्थं दक्षिणां रजतं चन्द्रदैवतं तन्मूल्योपकल्पितं द्रव्यं यथानामगोत्राय यथानामशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे' उत्सृजेत्। अथ भूयसी–दक्षिणाद्रव्यमादाय– 'ॐ अद्याऽमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानाम–मुकाऽमुकाऽमुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां विश्वेदेवपूर्वकाणां कृतैतत्सांवत्सरिकैकपार्वणश्राद्धप्रतिष्ठार्थं न्यूनातिरिक्तपरिपूर्णार्थं यद्देयमन्नपानादिकं द्रव्यं यथानामदैवतं नानानाम गोत्रेभ्यो ब्राह्मणेभ्यः कन्याकुमारेभ्यो ब्राह्मणीभ्यश्च यथाभागं विभज्य यथाकालेन दातुमहमुत्सृजे।।[९६]

अथ विसर्जनम्–अपसव्येन– 'ॐ वाजेवाजे व्वतव्वाजिनोधनेषुविप्राऽअमृताऽऋतज्ञाः। अस्ममध्वः पिबतमादयद्ध्वं तृप्तायात पथिभिर्देवयानैः। इति पित्रादीन् विसर्जयेत्।।

'ॐ आमावाजस्यप्रस्रवोजगम्यादेमेद्यावापृथिवीविश्वरूपे। आमागन्ताम्पितरा मातरा

९६. अनि सव्य भएर 'ॐ वसन्ताय०' मन्त्रहरू पढी वसन्त पूजा गरेर कपूरको बत्ती बाल्नू। अनि विश्वेदेवको अर्घपात्र चलाइदिनू। अपसव्य भएर पितृको अर्घपात्र उतानो पारिदिनू। अनि सव्य भएर मूल अनुसार विश्वेदेवको र पितृब्राह्मणको दक्षिणा–संकल्प गरिलिनू। अनि भूयसी दक्षिणा पनि संकल्प गर्नुपर्दछ।।

चामासोमोऽअमृतेत्वेन गम्यात्॥ ततः सव्येन 'ॐ पुरूरवोमाद्रवोनामानो विश्वेदेवाः प्रीयन्ताम्' इति विश्वेदेवं विसर्जयेत्॥ ततः–

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥ त्रिः पठेत् ॥

अपसव्येन दीपाच्छादनं विधाय, सव्येन हस्तौ पादौ प्रक्षाल्याऽऽचम्य 'ॐ यत्कृतं तत्सुकृतमस्तु' 'यन्न कृतं तद्विष्णोः प्रसादाद् ब्राह्मणवचनात् सर्वं परिपूर्णमस्तु॥'

प्रमादात् कुर्वतां कर्म प्रच्यवेताऽध्वरेषु च ।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥
आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्तु तथा राज्यं पितरः श्राद्धतर्पिताः ॥[९७]

९७. अब अपसव्य भएर 'ॐ व्वाजे व्वाजे०' 'पितृहरूको विसर्जन गरिदिनू र 'ॐ आमावाजस्य०' पनि पढ्नुपर्दछ अनि सव्य भएर 'ॐ पुरूरवो०' पढेर विश्वेदेवको विसर्जन गर्नू र 'ॐ देवताभ्यः०' तीनपल्ट पढिलिनू। अनि अपसव्य भएर बत्ती ढाकिदिनू। अनि सव्य भएर हात पाउ पखाली 'ॐ यत्कृतं०' तथा 'प्रमादात्०' एवं 'आयुः प्रजां०' पनि पढिलिनू॥

कायेन वाचा मनसेन्द्रियैर्वा, बुद्ध्यात्मना वा प्रकृतिः स्वभावात् ।
करोमि यद्यत् सकलं परस्मै, नारायणयेति समर्पये तत् ॥
यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥
ॐ अच्युताय नमः ३ ॥[९८]

॥ इति एकपार्वणश्राद्धविधिः समाप्तः॥

अथ पुरोहितोऽधःस्थं मन्त्रं पठन् यजमानाय तिलकादिकं कृत्वा प्रसादादिकं दद्यात् ॥ –

९८. अब कर्मपात्रको कुश–जल लिएर 'ॐ कायेन वाचा०' पढ़ी तीनपल्ट अच्युताय नमः३ भन्नू॥ एकपार्वण श्राद्ध सकियो ॥ अब यजमालाई पातीप्रसादी लाइदिदै पुरेतले पढ्नू–

हरि÷ ३ॐ शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्राजरसन्तनूनाम्। पुत्रासो यत्र पितरो–भवन्ति मानोमद्ध्यारीरिषतायुर्गन्तो:।। अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्मतासपितासपुत्र:। विश्वेदेवाऽअदिति:पञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्वम्।। स्वादुष ६ सद:पितरोव्वयो–धा: कृच्छ्रेश्रित: शक्तिवन्तोगभीरा:। चित्रसेनाऽइषुबलाऽअमृद्धा: सतोवीराऽउरवोव्रातसाहा:।। ब्राह्मणास: पितर: सोम्यास: शिवेनोद्यावापृथिवीऽअनेहसा।। पूषान: पातुदुरितादृता–वृधोरक्षा माकीर्न्नोऽअघश ६ सऽईशत।। पितृभ्य: स्वधायिभ्य: स्वधा नम: पितामहेभ्य: स्वधायिभ्य: स्वधा नम: प्रपितामहेभ्य: स्वधायिभ्य: स्वधा नम:। अक्षन् पितरो मीमदन्त पितरो ती तृपन्त पितर: पितर: शुन्धद्ध्वम्।। पुनन्तुमापितर: सोम्यास: पुनन्तुमापितामहा: पुनन्तु प्प्रपितामहा: पवित्रेण शतायुषा।। व्विश्वमायुर्व्यश्श्नवै।।[९९]

---

९९. अनि पुरोहितले '३ॐ शतमिन्नु०' आदि मन्त्रहरू उच्च स्वरमा पढ्दै यजमानलाई फूल प्रसाद लगाइदिनू। अनि यजमानले ब्राह्मण– भोजन गराई स्वयं पनि सपरिवार भोजन गर्नू ।।

# तीर्थश्राद्धविधिः

(बत्ती, कुशेबाहुन, सिधा पर्दैन । जजसको पिण्ड हो उसकै पिण्डमाथि तर्पण दिनुपर्छ।)

आसनं पिण्डदानं च पुनः प्रत्यवनेजनम् । दक्षिणा चाऽन्नसकल्पः सर्वतीर्थेष्वयं विधिः।। स्मृतिः--

हस्तौ, पादौ प्रक्षाल्य, आचम्य, कर्मपात्रम्-- ॐ यद्देवा देवहेडनन्देवासश्च कृमाव्वयम्। अग्निर्म्मातस्मादेनसो विश्वान्मुञ्चत्वꣳ हसः।। १।। ॐ यदि दिवा यदि नक्तमेनाꣳ सि च कृमाव्वयम्। व्यायुर्मातस्मादेनसो व्विश्वान्मुञ्चत्वꣳ हसः।। २।। ॐ यदि जाग्रद्यदि स्वप्नऽएनाꣳसि च कृमाव्वयम्। सूर्य्योमातस्मादेनसो व्विश्वान्मुञ्चत्वꣳहसः।। ३।। पवित्रम्– 'ॐ पवित्रेस्थो व्वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः। तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्।। जलम्– ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तु पीतये। शंय्योरभिस्रवन्तु नः।। तिलान्–तिलोसिसोमदैवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान् पृणाहि नः स्वाहा।। चन्दनम्–

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्।। अक्षतान्– ॐ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत। अस्तोषत स्वभानवोविप्रानविष्ठ–यामती योजान्विद्रते हरी।। यवान् – ॐ यवोसियवयास्मद्द्वेषो यवयारातीः।। पुष्पाणि– ॐ श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रेपार्श्वेनक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्नि–षाणामुम्मऽइषाण सर्वलोकम्मऽइषाण।।[१००]

कुशत्रयसहितं कर्मपात्रोदकमादाय–

ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा। यः स्मरेत् पुण्डरीकाक्षं स बाह्याऽभ्यन्तरः शुचिः।

ॐ विष्णुः ३, पुण्डरीकाक्षः पुनातु, श्राद्धीयवस्तूनि सिञ्चेत्। आत्मानमपि सिञ्चेत्। ततः करौ संपुटीकृत्य विष्णुं मनसा ध्यात्वा पूर्वमुखः प्रार्थयेत्–

ॐ नमो नमस्ते गोविन्द पुराणपुरुषोत्तम। इदं श्राद्धं हृषीकेश रक्षतां सर्वतो दिशः।।[१०१]

१००. कर्ताले हात–पाउ धोई आचमन गरेर प्रथम कर्मपात्र बनाउनू। त्यसमा ॐ यद्देवा० तीन मन्त्र पढ्नू र ॐ पवित्रेस्थो० मन्त्रले पवित्र राख्नू। ॐ शन्नोदेवी० ले जल राख्नू। ॐ तिलोसि० ले तिल र ॐ गन्धद्वारान्० ले चन्दन तथा ॐ अक्षन्नमी० यस मन्त्रले अक्षता एवं ॐ यवोसि० ले जौ अनि ॐ श्रीश्चते० मन्त्र पढेर फूल राख्नू।

१०१. अब कर्मपात्रको तीन टुक्रा कुश लिएर ॐ अपवित्रः० मन्त्र पढी श्राद्ध सामग्री र आफ्नू देहमा पनि छर्कनू। अनि हात जोरेर पूर्व फर्किई विष्णुको ध्यान गर्दा ॐ नमो नमस्ते० पढ्नू।

# तीर्थश्राद्धसंकल्पः

ॐ तत्सदद्यामुकमासेऽमुकपक्षेऽमुकतिथावमुकवासरेऽमुकतीर्थे मम आत्मनः समस्तपितॄणां समुद्धारणार्थं मातृपितृगुरुस्वसॄणामक्षय्यतृप्तिहेतवे समस्ततीर्थजन्यफलप्राप्त्यर्थं समस्तपितॄणामक्षय्यतृप्त्यर्थममुकतीर्थे तीर्थश्राद्धं पिण्डदानं चाऽहं करिष्ये। ततो दक्षिणाभिमुखः पितरोपनीतिमपसव्यं विधाय पातित–वामजानुः दक्षिणनम्रां वेदीं निर्माय पञ्चगव्येनाऽभिषिच्य परितः तिलगौरसर्षपपुष्पचन्दनानि विकिरेत्–

रक्षो भूतपिशाचेभ्यस्तथैवाऽसुरदोषतः । सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे॥

वेदीं निर्माय ततः द्विगुणभुग्नत्रिकुशरूपमासनानि द्वादश प्रत्येकं स्थापयेत्–

अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः ॥

ॐ कव्यवाडनलः सोमो यमश्चैवाऽर्यमा तथा । अग्निष्वात्ताबर्हिषदः सोमपाः पितरस्तथा॥[१०२]

१०२. अब तीर्थश्राद्धको संकल्प मूल अनुसार 'करिष्ये' सम्म पढ्नू र दक्षिण फर्किई बायाँ घुँडा मोरेर

ततः आसनोपरि तिलजलपुष्पगन्धादीनि पात्रे कृत्वा कुशादिकमादाय, '३ॐ अद्याऽमुकगोत्राणां मम पितृ–पितामह–प्रपितामहानाममुकामुकामुकशर्मणां सपत्नीकानां तथाऽमुकगोत्राणामासनोपरि अवनेजनमहं सम्प्रददे। एवं मातामह–प्रमातामह–वृद्धप्रमाता–महानाममुकामुकामुकशर्मणां सपत्नीकानां यथायथा– गोत्राणामन्येषां च पितॄणाम् आसनोपरि अवजेनमहं सम्प्रददे। आसनोपरि पात्रस्थं जलमर्द्धं दद्यात्, अर्द्धं जलमवशेषयेत्।।

ततः पिण्डमादाय, '३ॐ अद्याऽमुकगोत्रस्याऽस्मत्पितुरमुकनाम्नः, तस्य अक्षय्यतृप्त्यर्थम् इदं हविष्यांनमयममृतरूपं मधुतिलजलादिप्रोक्षितं पिण्डं तस्मै स्वधा ।। पुनः, ३ॐ अद्यामुकगोत्रस्याऽस्मत्पितामहस्याऽमुकनाम्नः तस्य अक्षय्यतृप्त्यर्थम्, इदं हविष्या–ऽन्नमयममृतरूपं मधुतिलजलप्रोक्षितं पिण्डं तस्मै स्वधा।। पुनः – ३ॐ अद्यामुकगोत्रोऽ–

दक्षिणतिर भिरालो परेको वेदी बनाउँदा अपसव्य हुनू र वेदीमा पंचगव्य, तिल र पहेंलो सरस्यूँ छरी ३ॐ रक्षोभूत० मन्त्र पढ्नू। अनि वेदीमा कुशका बाह्र आसन दिदा ३ॐ अयोध्या० र ३ॐ कव्यवाडनल–मन्त्र पढ्नू।

स्मत्प्रपितामहोऽमुकनामा तस्याऽक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयममृतरूपं तिलमधु–जलप्रोक्षितं पिण्डं तस्मै स्वधा।। पुन: –

ॐ अद्याऽमुकगोत्राया मम मातुरमुकीदेव्या अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयममृतरूपं मधुतिलजलप्रोक्षितं पिण्डं तस्यै स्वधा।। पुन: – ॐ अद्यामुकगोत्रा मम पितामही अमुकीनाम्नी देवी तस्या: अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयममृतरूपं मधुतिलजलप्रोक्षितं पिण्डं तस्यै स्वधा।। पुन:– ॐ अद्याऽमुकगोत्रा मम प्रपितामही अमुकीनाम्नी देवी तस्या: अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयममृतरूपं मधुतिलजलप्रोक्षितं पिण्डं तस्यै स्वधा।। पुन: – ॐ अद्याऽमुकगोत्र: अस्मन्मातामहोऽमुकनामा तस्य अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयममृतरूपं मधुतिलजलप्रोक्षितं पिण्डं तस्मै स्वधा।। पुन: – ॐ अद्याऽमुकगोत्रोऽस्मत्प्रमातामहोऽमुकनामा तस्य, अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयममृतरूपं मधुतिजलादिप्रोक्षितं पिण्डं तस्मै स्वधा।। पुन:– ॐ अद्याऽमुकगोत्रोऽस्मद्वृद्धप्रमाता–

महोऽमुकनामा तस्य अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयममृतरूपं मधुतिलजलप्रोक्षितं पिण्डं तस्मै स्वधा।। पुनः – ॐ अद्याऽमुकगोत्रा अस्मन्मातामही अमुकीनाम्नी देवी तस्या अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयममृतरूपं मधुतिलजलादिप्रोक्षितं पिण्डं तस्यै स्वधा।। पुनः – ॐ अद्याऽमुकगोत्रा, अस्मत्प्रमातामही अमुकीनाम्नी देवी तस्याः अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयममृतरूपं मधुतिलजलादिप्रोक्षितं पिण्डं तस्यै स्वधा।। पुनः – ॐ अद्याऽमुकगोत्रा अस्मद्वृद्धप्रमातामही, अमुकीनाम्नी देवी तस्या अक्षय्यतृप्त्यर्थमिदं हविष्यान्नमयममृतरूपं मधुतिलजलादिप्रोक्षितं पिण्डं तस्यै स्वधा।।[१०३]

एवं सपत्नजननी–पत्नी–पुत्र–कन्या–पितृव्य– मातुल–भ्रातृ–पितृस्वसृ–मातृ–स्वस्रात्मभगिनी–पितृव्यपुत्र–जामातृ–भागिनेय–श्वशुर–स्वश्र्वाचार्योपाध्याय–गुरु– मित्रशिष्याणामेतेषां पुरुषविषये सपत्नीकानां स्त्रीविषये सभर्तृकसापत्यानां यथानाम

१०३. अब ती आसनहरूमा दुनाना जल, फूल, चन्दन लिएर कुश लिई संकल्प पढ्दै राख्दै जानू। अनि पायस वा जौको पीठाको पिण्ड बनाएर मूलका प्रत्येक संकल्प अनुसार एकेक पिण्ड वेदीमा राख्दै जानू।।

गोत्रोच्चारणपूर्वकं गोत्रोच्चारणं कृत्वा पिण्डान् दद्यात्—[१०४]

ॐ आब्रह्मणो ये पितृवंशजाता, मातुस्तथा वंशभवा मदीयाः ।
वंशद्वये ये मम दासभूता, भृत्यास्तथा वाऽऽश्रितसेवकाश्च ॥
मित्राणि शिष्याः पशवश्च वृक्षा, दृष्टाश्च स्पृष्टाश्च कृतोपकाराः ।
जन्मान्तरे ये मम सङ्गताश्च, तेभ्यः स्वधा पिण्डमहं ददामि ॥

ये केचित् प्रेतरूपेण वर्तन्ते पितरो मम । ते सर्वे तृप्तिमायान्तु पिण्डदानेन शाश्वतीम् ॥
ये बान्धवाऽबान्धवा ये येऽन्यजन्मनि बान्धवाः । तेभ्यः पिण्डम् मया दत्तमक्षय्यमुपतिष्ठतु ॥
पितृवंशे मृता ये च मातृवंशे तथैव च । गुरुश्वशुरबन्धूनां ये चाऽन्ये बान्धवा मृताः ॥
ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः । तेभ्यः पिण्डम् मया दत्तमक्षय्यमुपतिष्ठतु ॥

ॐ अद्याऽमुकगोत्राणां मम पितृ—पितामह—प्रपितामहानाममुकामुकामुकशर्मणां तथा

१०४. अब यथाक्रम सौतेनी आमा, पत्नी, पुत्र, छोरी, जेठाबा कांछाबा, मामा, दाजु—भाइ, सानिमा, ठूली आमा, बहिनी, ज्वाइँ, भानिज, ससुरा, सासू, आचार्य, गुरु, मित्र, शिष्य यति पुरुषतर्फ सपत्नीक, स्त्री—विषयमा सापत्या आदि सबैलाई नाम गोत्र उच्चारण गर्दै पिण्ड दिनू।

मातृ—पितामही—प्रपितामहीनाममुकामुकामुकदेवीनां पिण्डोपरि प्रत्यवनेजनं सम्प्रददे।। इति।। एवं मातामह—प्रमातामह—वृद्धप्रमातामहानां सपत्नीकानां पिण्डोपरि प्रत्यवनेजनं सम्प्रददे।। इत्यनेन पिण्डोपरि—अर्धशेषजलं दद्यात्।[१०५]

ततः पिण्डपूजनम्। गन्धपुष्पधूपदीपनैवेद्यताम्बूलपूगीफलैलालवङ्गयज्ञोपवीतवस्त्र—तुलसीदलादिकं दत्त्वा जलेन नामगोत्रोच्चारणं कृत्वा तर्पणं कुर्यात्। ततः सव्यं कृत्वा, आचमनम्—

प्रमादात् कुर्वतां कर्म प्रच्यवेताऽध्वरेषु च । स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ।।

विष्णुस्मरणं कुर्यात्। अथ सूर्यार्घ्यम्—

---

१०५. अब ॐ आब्रह्मणो० यहाँदेखि अक्षय्यमुपतिष्ठतु सम्मका मन्त्रहरू मूल अनुसार पढिलिनू। त्यसपछि सबै पिण्डमा मूल अनुसार संकल्प पढ्दै अवनेजन दिनू।

एहि सूर्य सहस्रांशो तेजोराशे जगत्पते। अनुकम्पय मां भक्त्या गृहाणार्घ्यं दिवाकर।[१०६]

नमस्कारं च कृत्वा यथाशक्त्या ब्राह्मणपूजनं भोजनदक्षिणादानं च कुर्यात्। दक्षिणा—ॐ अद्य कृतैतत्तीर्थश्राद्धसांगतासिद्ध्यर्थं मम समस्तपितृणाम्—अक्षय्यतृप्त्यर्थमात्मना सह सर्वेषामुद्धारणाय न्यूनातिरिक्तदोषपरिहारार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणात्वेन तुभ्यमहं सम्प्रददे। 'ॐ स्वस्ति' प्रतिवचनम्। ॐ नमो व:०।। ततोऽभिरम्यताम्—विसर्जनम्। पिण्डानाघ्रायोत्थाप्य जले निक्षिपेत् वा गवे दद्यात्। शेषं कुशादिकं जले निक्षिपेत्—[१०७]

गोग्रासम्—सुरभिर्वैष्णावी माता नित्यं विष्णुपदे स्थिता । गोग्रासं च मया दत्तं त्वं गृहाणानुकम्पया ।।

श्वानबलिः—द्वौ श्वानौ श्यामशवलौ वैवस्वतकुलोद्भवौ। ताभ्यामन्नं प्रयच्छामि स्यातामेतावहिंसकौ ।।

---

१०६. अब चन्दन, फूल, धूप, दीप, नैवेद्य, पान, सुपारी, जनै, वस्त्र र तुलसीपत्र आदि चढाएर पिण्ड पूजा गरिदिनू। अनि सव्य भएर आचमन गरी ॐ प्रमादात्० मन्त्र पढी विष्णुको स्मरण गरेर सूर्यलाई अर्घ्य दिदा ॐ एहि सूर्य० मन्त्र पढ्नुपर्दछ।

१०७. यथाशक्ति ब्राह्मणको पूजा, भोजन, दक्षिणा पनि गर्नू। त्यसको संकल्प मूलमा हेर्नू। अनि ॐ नमो व:० मन्त्र पढेर विसर्जन गरी पिण्डको बास्ना लिएर टपरीमा हाली उचाली जलमा विसर्जन गरिदिनू अथवा गाईलाई खान दिनू।

काकबलिः—काकोऽसि यमदूतोऽसि वायसोऽसि महाबल । तुभ्यं बलिं प्रदास्यामि गृहाण यमकिंकर ॥
यत्फलं कपिलादाने कार्तिक्यां ज्येष्ठपुष्करे । तत्फलं वाण्डवश्रेष्ठ विप्राणां षादशौचने ॥

**विप्रदक्षिणपादप्रक्षालनम्— वामपादप्रक्षालनम्—**

विप्रपादोदकं पीत्वा यावत् तिष्ठति मोदिनी । तावत् पुष्करतीर्थेऽपि पिबन्ति पितरो जलम् ॥

**तिलककरणम्**[१] ॥[१०८]

चन्दनं वन्द्यते नित्यं पवित्रं पापनाशनम् । आपदो हरते नित्यं लक्ष्मीर्वसतु सर्वदा ॥

## ॥ इति तीर्थश्राद्ध विधि सकियो ॥

•

१०८. अब गोग्रास, श्वानबलि, काकबलि मूलमा भएका मन्त्र पढ्दै दिनुपर्दछ। अनि ब्राह्मणको दाहिने बायाँ पाउ पखाल्दा ॐ विप्रपादोदकं० र टीका लाइदिदा ॐ चन्दनं वन्द्यते० मन्त्र पढ्नू अनि पुरोहितले तिलक प्रसाद यजमानलाई दिनू।

१. हेमाद्रौ,—अर्घमावाहनं चैव द्विजाङ्गुष्ठनिवेशनम्॥ तृप्तिप्रश्नं च विकिरं तीर्थश्राद्धे बिवर्जयेत्॥
नाग्नौकरणं न नेतारं न च बलिर्वैश्वदेवता—पाद्मे०,
तीर्थश्राद्धं प्रकुर्वीत पक्वान्नेन विशेषतः। आमान्नेन हिरण्येन कन्दमूलैः फलैरपि॥

# अथ पितृसूक्तप्रारम्भः

हरिः ३ॐ अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा ।। अपहताऽअसुरा रक्षाᳬसि वेदिषदः।। १ ।। ये रूपाणि प्रतिमुञ्चमानाऽअसुराः सन्तः स्वधया चरन्ति ।। परापुरोनिपुरो ये भरन्त्यग्निष्टाँल्लोकात् प्रणुदात्यस्मात् ।। २ ।। अत्रपितरोमादयध्वंयथा– भागमावृषायध्वम् ।। अमीमदन्तपितरो यथाभागमावृषायिषत ।।३ ।। नमो वः पितरोरसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्तसतोवः पितरो देष्मैतद्वः पितरो व्वासः ।। ४ ।। आधत्तपितरोगर्भङ्कुमारम्पुष्क्करस्रजम् ।। यथेह पुरुषो सत् ।। ५ ।। ऊर्ज्जं वहन्तीरमृतङ्घृतम्पयः कीलालम्परिस्रुतम् ।। स्वधा– स्थतर्पयत मे पितृन् ।। ६ ।।

हरिः ३ॐ कृणुष्व पाजः प्रसितिन्नपृथ्वींयाहिराजेवामवाँ ऽ२ ।। इभेन ।।पितृष्वीमनु– प्रसितिन्द्रूणानोस्तासिविध्यरक्षसस्तपिष्ठैः ।। १ ।। तत्र भ्रमासऽ आशुयापतन्त्यनुशधृष–

ताशोशुचानः ॥ तपूंᳪ᳭ष्यग्नेजुह्वापतङ्गानसन्दितोविसृजविष्व गुल्क्काः ॥ २॥ प्रतिस्पशो—
विसृजतूर्णितमोभवापायुर्विशोऽअस्याऽअदब्धः ॥ य्योनोदूरेऽअघशᳫ᳭सोय्योऽ अन्त्यग्ने—
माकिष्टेव्यथिरादधर्षीत् ॥ ३॥ उदग्नेतिष्ठ प्रत्यातनुष्वन्यमित्राँ२॥ ऽओषतात्तिग्महेते॥ य्योनोऽ—
अरातिᳫ᳭समिधा नचक्रेनीचातन्धक्ष्यतसन्नशुष्कम् ॥ ४॥ ऊर्ध्वोभवप्रतिविद्ध्याध्यस्मदावि—
ष्कृणुष्वदैव्यान्यग्ने ॥ अवस्थिरातनुहियातुजूनाञ्जामिमजामिम्प्रमृणीहिशत्रून् ॥ ५॥

हरिः ॐ तदेवाग्निस्तदादित्यस्तद्वायुस्तदुचन्द्रमाः ॥ तदेव शुक्रन्तद्ब्रह्म ताऽआपः
सप्रजापतिः ॥ १॥ सर्वेनिमेषाजज्ञिरेविद्युतः पुरुषादधि ॥ नैनमूर्द्धन्नतिर्य्यञ्चन्नमद्
ध्येपरिजग्रभत् ॥ २॥ नतस्यप्रतिमाऽअस्तियस्य नाममहद्यशः ॥ हिरण्यगर्भऽइत्येषमामाहिᳫ᳭
सीदित्येषायस्मान्नजातऽइत्येषः ॥३॥ एषोहदेवः प्रदिशोनुसर्वाः पूर्वोहजातः सऽउ गर्भेऽअन्तः॥
सऽएव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठतिसर्वतोमुखः ॥ ४॥ यस्माज्जा—
तन्नपुराकिञ्चनैवयऽआबभूवभुवनानिविश्वा ॥ प्रजापतिः प्रजयासᳫ᳭रराणस्त्रीणिज्योतीᳪ᳭—
षिसचतेसषोडशी ॥ ५॥ येन द्यौरुग्रापृथिवी च दृढा येन स्वस्तमितं य्येन नाकः ॥

योऽअन्तरिक्षेरजसोविमानः कस्मै देवाय हविषाविधेम ॥ ६ ॥ यदङ्क्रन्दसीऽअवसातस्त—
भानेऽअभ्यैक्षेताम्मनसारेजमाने ॥ यत्राऽधिसूरऽउदितोविभातिकस्मै देवायहविषाविधेम॥
आपोहयद्बृहतीर्व्विश्चिदापः ॥ ७ ॥ वेनस्तत्पश्यन्निहितङ्गुहासद्यत्रविश्वम्भवत्येकनीडम्॥
तस्मिन्निदꣳ सञ्चविचैतिसर्वꣳसऽओतः प्रोतश्चविभूः प्रजासु ॥ ८ ॥ प्रतद्वोचेदमृतन्नुविद्वा—
न् गन्धर्वोधामविभृतङ्गुहासत्॥ त्रीणि पदानि निहिता गुहास्ययस्तानिवेदसपितुः पिता
सत् ॥ ९ ॥ स नोबन्धुर्ज्जनितासविधाताधामानिवेदभुवनानिविश्वा ॥ यत्रदेवाऽअमृत—
मानशानास्तृतीये धामन्नद्ध्यैरयन्त ॥ १० ॥ परीत्यभूतानिपरीत्यलोकान्परीत्यसर्वाः
प्रदिशोदिशश्च ॥ उपस्थायप्रथमजामृतस्यात्मनात्मानमभिसंविवेश ॥ ११ ॥ परिद्यावापृथिवी
सद्यऽइत्वापरिलोकान्परिदिशः परिस्वः ॥ ऋतस्यतन्तुं विततंविचृत्यतदपश्यत्तदभवत्त—
दासीत् ॥ १२ ॥ सदसस्पतिमद्भुतम्प्रियमिन्द्रस्यकाम्यम् ॥ सनिम्मेधामयासिषꣳस्वाहा ॥ १३ ॥
याम्मेधान्देवगणाः पितरश्चोपासते ॥ तयामामद्यमेधयाग्नेमेधाविनङ्कुरु स्वाहा ॥ १४ ॥
मेधाम्मेवरुणोददातु मेधामग्निः प्रजापतिः ॥ मेधा मिन्द्रश्चवायुश्चमेधान्धाताददातुमे

स्वाहा ।।१५।। इदम्मे ब्रह्म च क्षत्रञ्चोभेश्रियमश्नुताम् ।। मयिदेवादधतुश्रियमुत्तमान्तस्यैते स्वाहा ।।१६।।

हरि: ॐ सुरावन्तम्बर्हिषदᳪसुवीरंय्यज्ञᳪ हिन्वन्तिमहिषानमोभि: ।। दधाना: सोमन्दिविदेवतासुमदेमेन्द्रंय्यजमाना: स्वर्क्का: ।।१।। यस्तेरस: सम्भृतऽओषधीषुसोमस्यशुष्म÷ सुरया सुतस्य ।। तेनजिन्वयजमानम्मदेन सरस्वतीमश्विनाविन्द्रमग्निम् ।। २।। यमश्विनानमुचेरासुरादधिसरस्वत्यसुनोदिन्द्रियाय ।। इमन्तᳪ शुक्रम्मधुमन्तमिन्दुᳪ सोमᳪ राजानमिह भक्षयामि ।। ३।। यदत्ररिप्तᳪरसिन÷ सुतस्ययदिन्द्रोऽअपिबच्छचीभि÷ ।। अहन्तदस्यमनसाशिवेनसोमᳪ राजानमिह भक्षयामि ।। ४।। पितृभ्य÷ स्वधायिभ्य÷ स्वधा नम÷ पितामहेभ्य÷ स्वधायिभ्य÷ स्वधा नम÷ प्रपितामहेभ्य÷ स्वधायिभ्य÷ स्वधा नम÷।। अक्षन् पितरोमीमदन्तपितरोतीतृपन्तपितर÷ पितर: शुन्धद्ध्वम् ।।५।। पुनन्तुमापितर÷ सोम्यास÷ पुनन्तु मा पितामहा: पुनन्तु प्रपितामहा: पवित्रेण शतायुषा पुनन्तु मा पितामहा: पुनन्तु प्रपितामहा: ।। पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ।। ६।। अग्नऽआयूᳪषिपवसऽ

आसुवोर्ज्जमिषञ्चनः । आरेबाधस्वदुच्छुनाम् ॥ ७॥ पुनन्तुमादेवजनाः पुनन्तुमनसाधियः॥
पुनन्तुविश्वाभूतानिजातवेदः पुनीहि मा ॥ ८॥ पवित्रेणपुनीहिमाशुक्रेणदेवदीद्यत् ॥
अग्नेक्रत्वाक्रतूँऽ२॥अनु ॥ ९॥ यत्तेपवित्रमर्चिष्यग्नेविततमन्तरा ॥ ब्रह्मतेनपुनतु मा ॥१०॥
पवमानःसोऽअद्यनः पवित्रेणविचर्षणिः॥ यः पोतासपुनातु मा ॥११॥ उभाभ्यां देवसवितः
पवित्रेण सवेन च ॥ माम्पुनीहिविश्वतः ॥ १२॥ वैश्वदेवीपुनतीदेव्यागाद्यस्यामि
माब्रह्व्यस्तन्वोवीतपृष्ठाः ॥ तयामदन्तः सधमादेषुवयꣳस्यामपतयोरयीणाम् ॥ १३॥
ये समानाः समनसः पितरोयमराज्ये ॥ तेषाँल्लोकः स्वधयानमोयज्ञोदेवेषुकल्पताम् ॥ १४॥
ये समानाः समनसोजीवाजीवेषुमामकाः । तेषाꣳ श्रीर्मयिकल्पतामस्मिँल्लोकेशतꣳसमाः ॥१५॥
द्वेसृतीऽअश्रृणवम्पितॄणामहन्देवानामुतमर्त्यानाम् ॥ ताभ्यामिदं विश्वमेजत्समेति
यदन्तरापितरम्मातरञ्च ॥ १६॥ इदꣳ हविः प्रजननम्मेऽअस्तुदशवीरꣳ सर्वगणꣳस्व–
स्तये ॥ आत्मसनिप्रजासनिपशुसनिलोकसन्न्यभयसनि ॥ अग्निः प्रजाम्बहुलाम्मे–
करोत्वन्नम्पयोरेतोऽअस्मासुधत्त ॥ १७॥ उदीरता मवरऽउत्परासऽउन्मद्ध्यमाः पितरः

सोम्यास÷ ॥ असुञ्यऽईयुरवृकाऽ ऋतज्ञास्तेनोवन्तुपितरोहवेषु ॥ १८॥ अङ्गिरसोन:
पितरोनवग्वाऽअथर्वाणोभृगव÷ सोम्यास÷ ॥ तेषांवयꣳसुमतौयज्ञियानामपिभद्रेसौमनसे–
स्याम ॥ १९॥ ये न: पूर्वेपितर÷ सोम्यासोनूहिरेसोमपीथं वसिष्ठा: ॥ तेभिर्य्यम: सꣳर–
राणोहवीꣳष्युशन्नुशद्भि÷ प्रतिकाममत्तु ॥ २०॥ त्वꣳसोमप्रचिकितोमनीषात्वꣳरजिष्ठमनु–
नेषिपन्थाम् ॥ तवप्रणीतीपितरोनऽ इन्दोदेवेषुरत्नमभजन्तधीरा: ॥ २१॥ त्वयाहिन÷
पितर÷ सोमपूर्वेकर्माणिचक्रु: पवमानधीरा: ॥ वन्वन्नवात: परिधीँरपोर्णुवीरेभिरश्वैर्म्म–
घवाभवान: ॥ २२॥ त्वꣳसोमपितृभि: संविदानोनुद्यावापृथिवीऽआततन्थ ॥ तस्मैतऽइन्दोहविषा
विधेमवयꣳस्यामपतयोरयीणाम् ॥ २३॥ बर्हिषद: पितरऽऊत्यर्वागिमावोहव्याचकृमा–
जुषद्ध्वम् ॥ तऽआगतावसाशन्तमेनाथान: शंय्योररपोदधातन÷ ॥ २४॥ आहम्पितॄन्त्सु–
विदत्राँऽ२ ॥ आवित्सिनपातञ्चविक्रमणञ्चविष्णो: ॥ बर्हिषदोयेस्वधयासुतस्यभजन्त–
पित्वस्तऽइहागमिष्ठा: ॥ २५॥ उपहूता: पितर: सोम्यासोबर्हिष्येषुनिधिषुप्प्रियेषु ॥
तऽआगमन्तुतऽइहश्रुवन्त्वधिब्रुवन्तुतेवन्त्वस्मान् ॥ २६॥ आयन्तु न: पितर÷ सोम्यासोग्निष्वात्ता:

पथिभिर्देवयानैः । अस्मिन्यज्ञेस्वधयामदन्तोधिब्रुवन्तुतेवन्त्वस्मान् ॥ २७॥ अग्निष्वात्ताः पितरऽएहगच्छतसदः सदः सदतसुप्रणीतयः ॥ अत्ताहवींᳪषिप्रयतानिबर्हिष्यथा— रयᳬसर्ववीरन्दधातन ॥ २८॥ येऽअग्निष्वात्तायेऽअग्निष्वात्तामद्ध्येदिवः स्वधयामादयन्ते॥ तेब्भ्यः स्वराडसुनी तिमेताँय्यथावशन्तन्वङ्कल्पयाति ॥२९॥ अग्निष्वात्तानृतुमतोहवामहेना— राशᳬसेसोमपीथँय्यऽआशुः ॥ तेनोविप्रासः सुहवाभवन्तुवयᳪश्यामपतयोरयीणाम् ॥ ३०॥ आच्याजानुदक्षिणतोनिषद्येमँय्यज्ञमभिगृणीतविश्वे ॥ माहिᳬसिष्टपितरः केनचिन्नोयद्वऽआगः पुरुषताकराम ॥ ३१॥ आसीनासोऽअरुणीनामुपस्थेरयिन्धत्तदाशुषेमर्त्याय ॥ पुत्रेब्भ्यः पितरस्तस्यवस्वः प्रयच्छततऽइहोर्ज्जन्दधात ॥ ३२॥ यमग्नेकव्यवाहनत्वंचिन्मन्यसेरयिम्॥ तन्नोगीर्भिः श्रवाय्यन् दवेत्रापनयायुजम् ॥ ३३ ॥ योऽ अग्निः कव्यवाहनः पितॄन्यक्ष दृतावृधः ॥ प्रेदुहव्यानिवोचतिदेवेब्भ्यश्चपितृभ्यऽआ ॥ ३४॥ त्वमग्नऽईडितः कव्यवाहना— वाड्ढव्यानिसुरभीणिकृत्वी ॥ प्रादाः पितृभ्यः स्वधयातेऽअक्षन्नद्धित्वन्देवप्रयताह— वींᳪषि ॥ ३५॥ येचेहपितरोयेचनेहयाँश्चविद्मयाँ२ ॥ उचनप्रविद्म॥ त्वंव्वेत्थयतितेजातवेदः

स्वधाभिर्यज्ञꣳसुकृतञ्जुषस्व ।। ३६।। इदम्पितृभ्योनमोऽअस्त्वद्ययेपूर्वासोयऽउपरासऽईयुः।।
येपार्थिवेरजस्यानिषत्तायेवानूनꣳसुवृजनासुविक्षु ।। ३७।। अधायथानः पितरः परासः
प्रत्नासोऽअग्नऽऋतमाशुषाणाः ।। शुचीदयन्दीधितिमुक्थशासः क्षामाभिन्दन्तोऽअरुणीर–
पव्रन् ।। ३८।। उशन्तस्त्वानिधीमह्युशन्तः समिधीमहि ।। उशन्नुशतऽआवहपितॄन्हविषेऽ–
अत्तवे ।। ३९।।

हरिः ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ।। सभूमि ꣳ सर्वतस्पृत्वात्य–
तिष्ठद्दशाङ्गुलम् ।। १।। पुरुषऽएवेदꣳसर्व्वं यद् भूतंय्यच्चभाव्यम् ।। उतामृतत्वस्ये–
शानोयदन्नेनातिरोहति ।। २।। एतावानस्यमहिमातोज्यायाँश्च पूरुषः ।। पादोस्यविश्वा–
भूतानित्रिपादस्यामृतन्दिवि ।। ३।। त्रिपादूर्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः। ततोविष्वङ्व्य–
क्रामत्साशनानशनेऽअभि ।। ४।। ततो व्विराडजायतविराजोऽअधिपूरुषः ।। सजातोऽअत्य
रिच्यतपश्चाद्भूमिमथोपुरः ।। ५।। तस्माद्यज्ञात्सर्वहुतः सम्भृतम्पृषदाज्यम् ।। पशूँस्ताँश्च–
क्रेवायव्यानारण्याग्ग्राम्म्याश्च ये ।। ६।। तस्माद्यज्ञासत्सर्वहुतऽऋचः सामानि य–

ज्ञिरे।। छन्दाꣳसि जज्ञिरे तस्माद्यजुस्तस्म्मादजायत ।। ७।। तस्मादश्वाऽ–
अजायन्तयेकेचोभयादतः ।। गावोहजज्ञिरेतस्मात्तस्म्माज्जाताऽअजावयः ।। ८।।
तंयज्ञम्बर्हिषिप्रौक्षन्पुरुषञ्जातमग्रतः ।। तेनदेवाऽ अयजन्तसाद्ध्याऽऋषयश्च ये ।। ९।।
यत्पुरुषम्व्यदधुः कतिधाव्यकल्पयन्।। मुखङ्किमस्यासीत्किम्बाहूकिमुरूपादाऽउच्येते ।।१०।।
ॐ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यः कृतः ।। ऊरूतदस्ययद्वैश्यः पद्भ्याꣳशूद्रोऽ अजा–
यत ।। ११।। चन्द्रमामनसोजातश्चक्षोः सूर्य्योऽअजायत ।। श्रोत्राद्वायुश्चप्राणश्च–
मुखादग्निरजायत ।।१२।। नाभ्याऽआसीदन्तरिक्षꣳशीर्ष्णोद्यौः समवर्त्तत ।। पद्भ्याम्भू–
मिर्दिशः श्रोत्रात्तथालोकाँऽ २।। अकल्पयन् ।।१३।। यत्पुरुषेण हविषादेवायज्ञमतन्वत ।।
वसन्तोस्यासीदाज्यङ्ग्रीष्मऽइध्मः शरद्धविः ।। १४।। सप्तास्यासन्परिधयस्त्रिः सप्त–
समिधः कृताः ।। देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ।। १५।। यज्ञेनयज्ञम–
यजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन् ।। तेहनाकम्महिमानः सचन्तयत्रपूर्वेसाध्याः सन्ति
देवाः ।।१६।।

हरि: ॐ नमस्तेरुद्रमन्यवऽउतोतऽइषवे नम: ।। बाहुभ्यामुतते नम॑: ।। १ ।। यातेरुद्र–
शिवातनूरघोरापापकाशिनी: ।। तयानस्तन्वा शन्तमयागिरिशन्ताभिचाकशीहि ।। २ ।।
यामिषुङ्गिरिशन्तहस्तेबिभर्ष्यस्तवे ।। शिवाङ्गिरित्रताङ्कुरुमाहिꣳसी: पुरुषञ्जगत् ।। ३ ।।
शिवेनवचसात्त्वागिरिशाच्छावदामसि ।। यथान: सर्वमिज्जगदयक्ष्मꣳसुमनाऽअसत् ।। ४ ।।
अद्ध्यवोचदधिवक्ताप्रथमोदैव्योभिषक् ।। अहींश्चसर्वाञ्जम्भयन्त्सर्वाश्चयातुधान्योधराची:
परासुव ।। ५ ।। असौयस्ताम्म्रोऽअरुणऽउतबभ्रु: सुमङ्गल: ।। येचैनꣳरुद्राऽअभितोदिक्षुश्रिता:
सहस्रशोवैषाꣳहेडऽईमहे ।। ६ ।। असौयोवसर्प्पतिनीलग्ग्रीवोविलोहित: ।। उतैनङ्गोपाऽ–
अदृश्रन्नदृश्रन्नुदहार्य्य: सदृष्टो मृडयातिन: ।। ७ ।। नमोस्तुनीलग्रीवायसहस्राक्षायमीढुषे ।।
अथोयेऽअस्यसत्वानोहन्तेब्भ्योकरन्नम॑: ।। ८ ।। प्रमुञ्चधन्वनस्तमुभयोरात्त्योर्ज्याम् ।।
याश्चतेहस्तऽइषव: पराताभगवोवप ।। ९ ।। विज्यन्धनु॑: कपर्दिनोविशल्योबाणवाँऽ२ ।।
उत ।। अनेशन्नस्यायाऽइषवऽआभुरस्यनिषङ्गधि: ।। १० ।। यातेहेतिर्म्मीढुष्टमहस्तेब–
भूवते धनु॑: ।। तयास्म्मान्विश्वतस्त्वमयक्ष्मयापरिभुज ।। ११ ।। परितेधन्वनोहेति–

रस्मान्वृणक्तुविश्वत÷ ॥ अथोयऽइषुधिस्तवारेऽअस्मन्निधेहितम् ॥ १२॥ अवतत्य–
धनुष्ट्वꣳ सहस्राक्ष शतेषुधे ॥ निशीर्य्यशल्यानाम्मुखाशिवोन÷ सुमनाभव ॥ १३॥
नमस्तऽआयुधायानाततायधृष्णवे ॥ उभाब्भ्यामुततेनमोबाहुब्भ्यान्तवधन्वने ॥ १४॥
मानोमहान्तमुतमानोऽअर्भकम्मानऽउक्षन्तमुतमानऽउक्षितम् ॥ मानोवधीः पितरम्मोतमातरम्मान÷
प्रियास्तन्वोरुद्ररीरिषः ॥१५॥ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः॥
मानोवीरान्रुद्रभामिनोवधीर्हविष्मन्तः सदमित्वाहवामहे ॥ १६॥ नमोहिरण्यबाहवे–
सेनान्येदिशाञ्चपतयेनमोनमोवृक्षेभ्योहरिकेशेभ्यः पशूनाम्पतयेनमोनम÷ शष्पिञ्जरायत्विषीमते
पथीनाम्पतये नमोनमो हरिकेशायोपवीतिनेपुष्टानाम्पतयेनमोनमोबभ्लुशाय ॥ १७॥ ॐ
नमो बभ्लुशायव्याधिनेन्नानाम्पतयेनमोनमोभवस्यहेत्यैजगताम्पतयेनमोनमो रुद्रायाततायि–
नेक्षेत्राणाम्पतयेनमोनम÷ सूतायाहन्त्यैवनानाम्पतयेनमो रोहिताय ॥१८॥ नमोरोहितायस्थपतये
वृक्षाणाम्पतये नमोनमोभुवन्तयेवारिवस्कृतायौषधीनाम्पतये नमोनमो मन्त्रिणेवाणि–
जायकक्षाणाम्पतये नमोनमोऽउच्चैर्घोषायाक्रन्दयतेपत्तीनाम्पतये नमो नम÷ कृत्स्नाय॥१९॥

नमः कृत्स्नायतया धावतेसत्त्वेनाम्पतये नमोनमः सहमानायनिव्याधिनऽआव्याधिनीनाम्पतये नमोनमो निषङ्गिणे ककुभायस्तेनानाम्पतये नमोनमोनिचेरवेपरिचरायारण्यानाम्पतयेनमो वञ्चते।। २०।। नमो वञ्चते परिवञ्चतेस्तायूनाम्पतये नमोनमोनिषङ्गिणऽइषुधिमते— तस्क्कराणाम्पतयेनमोनमः सृकायिभ्योजिघाᳬसद्भ्योमुष्णताम्पतये नमोनमोसिमद्भ्यो— नक्तञ्चरद्भ्योविकृन्तानाम्पतये नमः ।। २१ ।। नमऽउष्णी षिणेगिरिचरायकुलुञ्चानाम्पतये नमोनमऽइषुमद्भ्योधन्वायिभ्यश्च वोनमोनमऽआतन्वानेभ्यः प्रतिदधानेभ्य— श्चवोनमोनमऽआयच्छद्भ्योस्यद्भ्यश्चवोनमोनमः ।। २२।। नमोविसृजद्भ्यो विद्ध्य— द्भ्यश्चवोनमोनमः स्वपद्भ्योजाग्रद्भ्यश्चवोनमोनमः । शयानेभ्यऽ आसीने— भ्यश्चवोनमोनमस्तिष्ठद्भ्योधावद्भ्यश्चवोनमो नमः सभाभ्यः ।। २३।। नमः सभाभ्यः सभापतिभ्यश्चवोनमोनमोश्वेभ्योश्वपतिभ्यश्चवोनमोनमऽआव्याधिनीभ्यो— विविद्ध्यन्तीभ्यश्चवो नमोनमऽउगणाभ्यस्तृᳬहतीभ्यश्चवोनमोनमो गणेभ्यः ।। २४।। ॐ नमोगणेभ्यो गणपतिभ्यश्चवो नमोनमो व्रातेभ्योव्रातपतिभ्यश्चवोनमोनमोगृत्सेभ्यो

गृत्सपतिभ्यश्चवोनमोनमोविरूपेभ्योविश्वरूपेभ्यश्चवोनमो नम: सेनाभ्य: ॥ २५॥
नम: सेनाभ्य÷ सेनानिभ्यश्चवोनमोनमोरथिभ्योऽअरथेभ्यश्चवोनमोनम÷क्षतृभ्य÷
संग्रहीतृभ्यश्चवोनमोनमोमहद्भ्योऽअर्भकेभ्यश्चवो नमो नम: ॥२६॥ नमस्तक्षद्भ्योर–
थकारेभ्यश्चवोनमोनम÷ कुलालेभ्य: कर्म्मारेभ्यश्चवोनमोनमोनिषादेभ्य÷ पुञ्जि–
ष्ठेभ्यश्चवोनमोनम÷ श्वनिभ्योमृगयुभ्यश्चवोनमो नम÷ ॥ २७॥ नम÷ श्वभ्य:
श्वपतिभ्यश्चवोनमोनमोभवाय च रुद्रायच नम÷ शर्वायचपशुपतयेचनमोनीलग्ग्रीवाय–
चशितिकण्ठायचनम÷ ॥ २८ ॥ ३ॐ कपर्द्दिनेचव्युप्तकेशायचनम÷ सहस्त्रक्षायचशतधन्वनेच–
नमोगिरिशयायचशिपिविष्टायचनमो मीढुष्टमायचेषुमते च ॥२९॥ नमोह्रस्वायच–
वामनायचनमोबृहतेचव्वर्षीयसेचनमोवृद्धायचसवृधेचनमोग्ग्र्यायचप्प्रथमायच ॥३०॥
नमऽआशवेचाजिरायचनम: शीग्घ्यायचशीभ्यायचनमऽऊर्म्यायचावस्वन्यायचनमोना–
देयायचद्वीप्यायच ॥ ३१॥ नमोज्येष्ठायचकनिष्ठायचनम÷ पूर्वजायचापरजायचनमोमध्य–
मायचापगल्भायचनमोजघन्यायचबुध्न्यायच नम÷॥ ३२॥ सोभ्याय चप्रतिसर्ब्बायचनमो–

ध्याम्यायचक्षेम्यायच नमः श्लोक्यायचावसान्यायचनमऽऊर्वर्य्यायचखल्ल्याय च ॥ ३३॥
नमोवन्यायचकक्ष्यायच नमः श्रवायचप्रतिश्रवायचनमऽआशुषेणायचाशुरथायचनमः
शूरायचावभेदिने च ॥ ३४॥ नमोविल्मिनेचकवचिनेचनमोवर्मिणेचवरूथिनेचनमः
श्रुतायचश्रुतसेनायचनमोदुन्दुभ्यायचाहनन्याय च ॥ ३५॥ नमोधृष्णवेचप्रमृशायच–
नमोनिषङ्गिणेचेषुधिमतेचनमस्तीक्ष्णेषवेचायुधिनेचनमः स्वायुधायचसुधन्वनेच ॥ ३६॥
नमः स्रुत्यायचपत्थ्याय च नमः काट्यायचनीप्याय च नमः कुल्यायचसरस्यायच–
नमोनादेयायचव्वैशन्तायचनमः ॥ ३७॥ कूप्यायचावट्यायचनमोवीद्ध्यायचातप्यायच–
नमोमेघ्यायचविद्युत्यायचनमोवर्ष्यायचावर्ष्याय च ॥ ३८॥ नमोवात्यायचरेष्म्यायच–
नमोवास्तव्यायचवास्तुपाय च नमः सोमायचरुद्रायचनमस्ताम्रायचारुणाय च ॥ ३९॥
नमः शङ्गवेचपशुपतयेचनमऽ उग्रायचभीमायचनमोग्रेवधायचदूरेवधायचनमोहन्त्रेचहनीय
सेचनमोवृक्षेभ्योहरिकेशेभ्योनमस्ताराय ॥ ४०॥ नमः शम्भवायचमयोभवायचनमः
शङ्करायचमयस्क्करायचनमः शिवायचशिवतराय च ॥ ४१॥ नमः पार्य्यायचावार्य्यायचनमः

प्रतरणायचोत्तरणायचनमस्तीर्त्थ्यायचकूल्यायचनम÷ शष्प्यायचफेन्यायचनम÷ ॥४२॥
सिकत्यायचप्रवाह्यायचनम÷ किं शिलायचक्षयणायचनम÷ कपर्द्दिनेचपुलस्तयेचनमऽ—
इरिण्यायचप्रपत्थ्याय च ॥ ४३॥ नमोव्व्रज्यायचगोष्ठ्यायचनमस्तल्प्यायचगेह्या
यचनमोहृदय्यायचनिवेष्प्यायचनम÷ काट्यायचगह्वरेष्ठायचनम÷ ॥४४॥ शुष्क्याय च—
हरित्यायचनम÷ पा७ँसव्यायचरजस्यायचनमोलोप्यायचोलप्यायचनमऽऊर्व्यायच—
सूर्व्यायचनम÷ ॥४५॥ पर्णायचपर्णसदायचनमऽउद्गुरमाणायचाभिघ्नतेचनमऽआखिदतेच—
प्रषिदतेचनमऽइषुकृद्भ्योधनुष्कृद्भ्यश्चवोनमोनमोव÷ किरिकेभ्योदेवाना७ँहृदयेभ्योनमोवि—
चिन्वत्केभ्योनमोविक्षिणत्केभ्योनमऽआनिर्हतेभ्य÷ ॥ ४६॥ द्रापेऽअन्धसस्पतेदरिद्र—
नीललोहित ॥ आसाम्प्रजानामेषाम्पशूनाम्माभेर्म्मारोङ्मोचन: किञ्चनाममत् ॥ ४७॥
इमारुद्रायतवसेकपर्द्दिनेक्षयद्वीरायप्रभरामहेमती: ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वम्पुष्टङ्ग्रामेऽ—
अस्मिन्ननातुरम् ॥ ४८॥ यातेरुद्रशिवातनू: शिवाविश्वाहाभेषजी: ॥ शिवारु—
तस्यभेषजीतयानोमृडजीवसे ॥४९॥ परिनोरुद्रस्यहेतिर्वृणक्तुपरित्वेषस्य दुर्म्मतिरघायो:॥

अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृड ॥ ५० ॥ मीढुष्टमशिवतमशिवोन॰
सुमना भव ॥ परमेवृक्षऽआयुधन्निधायकृत्तिंवसानऽआचरपिनाकम्बिभ्रदागहि ॥ ५१ ॥
विकिरिद्रविलोहितनमस्तेऽअस्तुभगव॰ ॥ यास्तेसहस्रꣳहेतयोन्यमस्मन्निव पन्तुता: ॥ ५२ ॥
सहस्राणिसहस्रशोबाह्वोस्तवहेतय॰तासामीशानोभगव: पराचीनामुखाकृधि ॥ ५३ ॥
असंख्यातासहस्राणियेरुद्राऽअधिभूम्म्याम् । तेषाꣳ सहस्रयोजनेवधन्वानितन्मसि ॥ ५४ ॥
अस्मिन्महत्यर्णवेन्तरिक्षेभवाऽ अधि ॥ तेषाꣳ सह० ॥ ५५ ॥ नीलग्ग्रीवा॰ शितिकण्ठा–
दिवꣳरुद्राऽउपश्रिता॰ ॥ तेषाꣳ सह० ॥ ५६ ॥ नीलग्ग्रीवा: शितिकण्ठा: शर्वाऽअध:
क्षमाचरा: ॥ तेषाꣳ सह० ॥ ५७ ॥ येवृक्षेषुशष्पिञ्जरानीलग्ग्रीवाविलोहिता॰ ॥ तेषाꣳ
सह० ॥ ५८ ॥ येभूतानामधिपतयोविशिखास॰ कपर्दिन॰ ॥ तेषाꣳ सह० ॥ ५९ ॥
येपथाम्पथिरक्षयऽऐलवृदाऽआयुर्य्युध: ॥ तेषाꣳ सह० ॥ ६० ॥ येतीर्थानिप्र चरन्ति–
सृकाहस्तानिषङ्गिण॰ ॥ तेषाꣳ सह० ॥ ६१ ॥ येन्नेषु विविध्यन्तिपात्रेषुपिबतोजनान् ॥

तेषाᳬ सह० ॥ ६२॥ यऽएतावन्तश्च भूयाᳬसश्चदिशोरुद्रावितस्थिरे ॥ तेषाᳬ सह० ॥ ६३॥ नमोस्तुरुद्रेभ्यो येदिवियेषांवर्षमिषवः ॥ तेभ्योदशप्राचीर्दशदक्षिणा–दशप्रतीचीर्दशोदीचीर्दशोद्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुतेनो मृडयन्तुतेयन्द्विष्मोयश्चनो–द्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६४॥ नमोस्तुरुद्रेभ्योयेन्तरिक्षेयेषावातऽइषवः ॥ तेभ्योदश–प्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तु तेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६५॥ नमोस्तुरुद्रेभ्योयेपृथिव्यांयेषामन्न–मिषवः ॥ तेभ्योदशप्राचीर्दशदक्षिणा दशप्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेभ्यो–नमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६६॥

॥ इति पितृसूक्तम् ॥

श्रीः

ॐ रामाय नमः

# रामगीता

*श्रीमहादेव उवाच—*

ततो जगन्मङ्गलमङ्गलात्मना, विधाय रामायणकीर्तिमुत्तमाम् ।
चचार पूर्वाचरितं रघूत्तमो, राजर्षिवर्यैरभिसेवितं यथा ॥ १ ॥
सौमित्रिणा पृष्ट उदारबुद्धिना, रामः कथाः प्राह पुरातनीः शुभाः ।
राज्ञः प्रमत्तस्य नृगस्य शापतो, द्विजस्य तिर्यक्त्वमथाऽऽह राघवः ॥ २ ॥
कदाचिदेकान्त उपस्थितं प्रभुं, रामं रमालालितपादपङ्कजम् ।
सौमित्रिरासादितशुद्धभावनः, प्रणम्य भक्त्या विनयान्वितो ऽब्रवीत् ॥ ३ ॥

*सौमित्रिरुवाच—*

त्वं शुद्धबोधोऽसि हि सर्वदेहिनामात्मास्यधीशोऽसि निराकृतिः स्वयम् ।
प्रतीयसे ज्ञानदृशां महामते, पादाब्जभृङ्गाहितसङ्गसङ्गिनाम् ॥ ४॥
अहं प्रपन्नोऽस्मि पदाम्बुजं प्रभो, भवाऽपवर्गं तव योगिभावितम् ।
यथाञ्जसाऽज्ञानमपारवारिधिं, सुखं तरिष्यामि तथाऽनुशाधि माम् ॥ ५॥
श्रुत्वाऽथ सौमित्रिवचोऽखिलं तदा, प्राह प्रपन्नार्तिहरः प्रसन्नधीः ।
विज्ञानमज्ञानतमः प्रशान्तये, श्रुतिप्रपन्नं क्षितिपालभूषणः ॥ ६॥

*श्रीरामचन्द्र उवाच—*

आदौ स्ववर्णाश्रमवर्णिताः क्रियाः, कृत्वा समासादितशुद्धमानसः ।
समाप्य तत्पूर्वमुपात्तसाधनः, समाश्रयेत् सद्गुरुमात्मलब्धये ॥ ७॥
क्रिया शरीरोद्भवहेतुरादृता, प्रियाऽप्रियौ तौ भवतः सुरागिणः ।
धर्मेतरौ तत्र पुनः शरीरकं, पुनः क्रिया चक्रवदीर्यते भवः ॥ ८॥

अज्ञानमेवाऽस्य हि मूलकारणं, तद्धानमेवाऽत्र विधौ विधीयते ।
विद्यैव तन्नाशविधौ पटीयसी, न कर्म तज्जं सविरोधमीरितम् ॥ ९॥
नाऽज्ञानहानिर्न च रागसंक्षयो, भवेत्ततः कर्म सदोषमुद्भवेत् ।
ततः पुनः संसृतिरप्यवारिता, तस्माद् बुधो ज्ञानविचारवान् भवेत् ॥ १०॥
ननु क्रिया वेदमुखेन चोदिता, तथैव विद्या पुरुषार्थसाधनम् ।
कर्तव्यता प्राणभृतः प्रचोदिता, विद्यासहायत्वमुपैति सा पुनः ॥ ११॥
कर्माकृतौ दोषमपि श्रुतिर्जगौ, तस्मात् सदा कार्यमिदं मुमुक्षुणा ।
ननु स्वतन्त्रा ध्रुवकार्यकारिणी, विद्या न किञ्चिन्मनसाप्यपेक्षते ॥ १२॥
न सत्यकार्योऽपि हि यद्वदध्वरः, प्रकाङ्क्षतेऽन्यानपि कारकादिकान् ।
तथैव विद्या विधितः प्रकाशितै–र्विशिष्यते कर्मभिरेव मुक्तये ॥ १३॥
केचिद्वदन्तीति वितर्कवादिन–स्तदप्यसद्दृष्टविरोधकारणात् ।
देहाभिमानादभिवर्धते क्रिया, विद्यागताहङ्कृतितः प्रसिद्ध्यति ॥ १४॥

विशुद्धविज्ञानविरोचनाञ्चिता, विद्यात्मवृत्तिश्च रमेति भण्यते ।
उदेति कर्माऽखिलकारकादिभि—र्निहन्ति विद्याऽखिलकारकादिकम् ॥ १५॥
तस्माद् यजेत् कार्यमशेषतः सुधी—र्विद्याविरोधान्न समुच्चयो भवेत् ।
आत्मानुसन्धानपरायणः सदा, निवृत्तसर्वेन्द्रियवृत्तिगोचरः ॥ १६॥
यावच्छरीरादिषु माययात्मधी—स्तावद्विधेयो विधिवादकर्मणाम् ।
नेतीति वाक्यैरखिलं निषिध्य तज्—ज्ञात्वा परात्मानमथ त्यजेत् क्रियाः ॥ १७॥
यदा परात्मात्मविभेदभेदकं, विज्ञानमात्मन्यवभाति भास्वरम् ।
तदैव माया प्रविलीयतेऽञ्जसा, सकारका कारणमात्मसंसृतेः ॥ १८॥
श्रुतिप्रमाणाऽभिविनाशिता च सा, कथं भविष्यत्यपि कार्यकारिणी ।
विज्ञानमात्रादमलाद्द्वितीयत—स्तस्मादविद्या न पुनर्भविष्यति ॥ १९॥
यदि स्म नष्टा न पुनः प्रसूयते, कर्ताऽहमस्येति मतिः कथं भवेत् ।
तस्मात् स्वतन्त्रा न किमप्यपेक्षते, विद्या विमोक्षाय विभाति केवला ॥ २०॥

सा तैत्तिरीयश्रुतिराह सादरं, न्यासं प्रशस्ताऽखिलकर्मणां स्फु टम् ।
एतावदित्याह च वाजिनां श्रुति–र्ज्ञानं विमोक्षाय न कर्म साधनम् ॥ २१॥
विद्यासमत्वेन तु दर्शितस्त्वया, क्रतुर्न दृष्टान्त उदाहृतः समः ।
फलैः पृथक्त्वाद् बहुकारकैः क्रतुः, संसाध्यते ज्ञानमतो विपर्ययम् ॥ २२॥
स प्रत्यवायो ह्यहमित्यनात्मधीरज्ञप्रसिद्धा न तु तत्त्वदर्शिनः ।
तस्माद् बुधैः त्याज्यमविक्रियात्मभिर्विधानतः कर्मविधिप्रकाशितम् ॥ २३॥
श्रद्धान्वितस्तत्त्वमसीति वाक्यतो, गुरोः प्रसादादपि शुद्धमानसः ।
विज्ञाय चैकात्म्यमथात्मजीवयोः, सुखी भवेन्मेरुरिवाऽप्रकम्पनः ॥ २४॥
आदौ पदार्थावगतिर्हि कारणं, वाक्यार्थविज्ञानविधौ विधानतः ।
तत्त्वं पदार्थौ परमात्मजीवका–वसीति चैकात्म्यमथानयोर्भवेत् ॥ २५॥
प्रत्यक्परोक्षादिविरोधमात्मनो–र्विहाय संगृह्य तयोश्चिदात्मताम् ।
संशोधितां लक्षणया च लक्षितां, ज्ञात्वा स्वमात्मानमथाऽद्वयो भवेत् ॥ २६॥

एकात्मकत्वाज्जहती न संभवेत्, तथाऽजहल्लक्षणता विरोधतः ।
सोऽयं पदार्थाविव भागलक्षणा, युज्येत तत्त्वं पदयोरदोषतः ॥ २७॥
रसादिपञ्चीकृतभूतसम्भवं, भोगालयं दुःखसुखादिकर्मणाम् ।
शरीरमाद्यन्तवदादिकर्मजं, मायामयं स्थूलमुपाधिमात्मनः ॥ २८॥
सूक्ष्मं मनोबुद्धिदशेन्द्रियैर्युतं, प्राणैरपञ्चीकृतभूतसम्भवम् ।
भोक्तुः सुखादेरनुसाधनं भवे–च्छरीरमन्यद्विदुरात्मनो बुधाः ॥ २९॥
अनाद्यनिर्वाच्यमपीह कारणं, मायाप्रधानं तु परं शरीरकम् ।
उपाधिभेदात् तु यतः पृथक् स्थितं, त्वात्मानमात्मन्यवधारयेत् क्रमात् ॥ ३०॥
कोशेष्वयं तेषु तु तत्तदाकृति–र्विभाति सङ्गात् स्फटिकोपलो यथा ।
असङ्गरूपोऽयमजो यतोऽद्वयो, विज्ञायते ऽस्मिन् परितो विचारिते ॥ ३१॥
बुद्धेस्त्रिधा वृत्तिरपीह दृश्यते, स्वप्नादिभेदेन गुणत्रयात्मनः ।
अन्योऽन्यतोऽस्मिन् व्यभिचारतो मृषा, नित्ये परे ब्रह्मणि केवले शिवे ॥ ३२॥

देहेन्द्रियप्राणमनश्चिदात्मनां, सङ्घादजस्रं परिवर्तते धियः ।
वृत्तिस्तमोमूलतयाऽज्ञलक्षणा, यावद् भवेत् तावदसौ भवोद्भवः ॥ ३३॥
नेति प्रमाणेन निराकृताऽखिलो, हृदा समास्वादितचिद्घनाऽमृतः ।
त्यजेदशेषं जगदात्तसद्रसं, पीत्वा यथाऽम्भः प्रजहाति तत्फलम् ॥ ३४॥
कदाचिदात्मा न मृतो न जायते, न पेयते नाऽपि विवर्धतेऽनवः ।
निरस्तसर्वातिशयः सुखात्मकः, स्वयंप्रभः सर्वगतोऽयमद्वयः ॥ ३५॥
एवंविधे ज्ञानमये सुखात्मके, कथं भवो दुःखमयः प्रतीतये ।
अज्ञानतो ऽध्यासवशात् प्रकाशते, ज्ञाने विलीयेत विरोधतः क्षणात् ॥ ३६॥
यदन्यदन्यत्र विभाव्यते भ्रमा—दध्यासमित्याहुरमुं विपश्चितः ।
असर्पभूतेऽहिविभावनं यथा, रज्ज्वादिके तद्वदपीश्वरे जगत् ॥ ३७॥
विकल्पमायारहिते चिदात्मके—ऽहङ्कार एषः प्रथमः प्रकल्पितः ।
अध्यास एवात्मनि सर्वकारणे, निरामये ब्रह्मणि केवले परे ॥ ३८॥

इच्छादिरागादिसुखादिधर्मिकाः, सदा धियः संसृतिहेतवः परे ।
यस्मात् प्रसुप्तौ तदभावतः परः, सुखस्वरूपेण विभाव्यते हि नः ॥ ३९॥
अनाद्यविद्योद्भवबुद्धिबिम्बितो, जीवः प्रकाशोऽयमितीर्य ते चितः ।
आत्माधियः साक्षितया पृथक् स्थितो, बुद्ध्या परिछिन्नपरः स एव हि ॥ ४०॥
चिद्बिम्बसाक्ष्यात्मधियां प्रसङ्गत–स्त्वेकत्र वासादनलाक्तलोहवत् ।
अन्योन्यमध्यासवशात् प्रतीयते, जडाऽजडत्वं च चिदात्मचेतसोः ॥ ४१॥
गुरोः सकाशादपि वेदवाक्यतः, सञ्जातविद्याऽनुभवो निरीक्ष्य तम् ।
स्वात्मानमात्मस्थमुपाधिवर्जितं, त्यजेदशेषं जडमात्मगोचरम् ॥ ४२॥
प्रकाशरूपोऽहमजोऽहमद्वयो–ऽसकृद् विभातोऽहमतीव निर्मलः ।
विशुद्धविज्ञानघनो निरामयः, सम्पूर्ण आनन्दमयोऽहमक्रियः ॥ ४३॥
सदैव मुक्तोऽहमचिन्त्यशक्तिमा–नतीन्द्रियज्ञानमविक्रियात्मकः ।
अनन्तपारोऽहमहर्निशं बुधै–र्विभावितोऽहं हृदि वेदवादिभिः ॥ ४४॥

एवं सदात्मानमखण्डितात्मना, विचारमाणस्य विशुद्धभावना ।
हन्यादविद्यामचिरेण कारकै–रसायनं यद्वदुपासितं रुजः ॥ ४५॥
विविक्त आसीन उपारतेन्द्रियो, विनिर्जितात्मा विमलान्तराशयः ।
विभायेदेकमनन्यसाधनो, विज्ञानदृक्केवल आत्मसंस्थितः ॥ ४६॥
विश्वं यदेतत् परमात्मदर्शनं, विलापयेदात्मनि सर्वकारणे ।
पूर्णश्चिदानन्दमयोऽवतिष्ठते, न वेद बाह्यं न च किञ्चिदान्तरम् ॥ ४७॥
पूर्वं समाधेरखिलं विचिन्तये–दोङ्कारमात्रं सचराचरं जगत् ।
तदेव वाच्यं प्रणवो हि वाचको, विभाव्यतेऽज्ञानवशान्न बोधतः ॥ ४८॥
अकारसंज्ञः पुरुषो हि विश्वको, ह्युकारकस्तैजस ईर्यते क्रमात् ।
प्राज्ञो मकारः परिपठ्यतेऽखिलैः, समाधिपूर्वं न तु तत्त्वतो भवेत् ॥ ४९॥
विश्वं त्वकारं पुरुषं विलापये–दुकारमध्ये बहुधा व्यवस्थितम् ।
ततो मकारे प्रविलाप्य तैजसम्, द्वितीयवर्णं प्रणवस्य चाऽन्तिमे ॥ ५०॥

मकारमप्यात्मनि चिद्घने परे, विलापयेत् प्राज्ञमपीह कारणम् ।
सोऽहं परं ब्रह्म सदा विमुक्तिमद्, विज्ञानदृङ्मुक्त उपाधितोऽमल: ॥ ५१ ॥
एवं सदा जातपरात्मभावन:, स्वानन्दतुष्ट: परिविस्मृताऽखिल: ।
आस्ते स नित्यात्मसुखप्रकाशक:, साक्षाद्विमुक्तोऽचलवारिसिन्धुवत् ॥ ५२ ॥
एवं सदाभ्यस्तसमाधियोगिनो, निर्वृत्तसर्वेन्द्रियगोचरस्य हि ।
विनिर्जिताऽशेषरिपोरहं सदा, दृश्यो भवेयं जितषड्गुणाऽऽत्मन: ॥ ५३ ॥
ध्यात्वैवमात्मानमहर्निशं मुनि–स्तिष्ठेत् सदा मुक्तसमस्तबन्धन: ।
प्रारब्धमश्नन्नभिमानवर्जितो, मय्येव साक्षात् प्रविलीयते तत: ॥ ५४ ॥
आदौ च मध्ये च तथैव चाऽन्ततो, भवं विदित्वा भयशोककारणम् ।
हित्वा समस्तं विधिवादचोदितं, भजेत् स्वमात्मानमथाऽखिलात्मनाम् ॥ ५५ ॥
आत्मन्यभेदेन विभावयन्निदं, भवत्यभेदेन मयाऽऽत्मना तदा ।
यथा जलं वारिनिधौ यथा पय:, क्षीरे वियद्व्योम्न्यनिले यथाऽनिल: ॥ ५६ ॥
इत्थं यदीक्षेत हि लोकसंस्थितो, जगन्मृषैवेति विभावयन्मुनि: ।
निराकृतत्वाच्छ्रुतियुक्तिमानतो, यथेन्दुभेदो दिशि दिग्भ्रमादय: ॥ ५७ ॥

यावन्न पश्येदखिलं मदात्मकं, तावन्मदाराधनतत्परो भवेत् ।
श्रद्धालुरत्यूर्जितभक्तिलक्षणो, यस्तस्य दृश्योऽहमहर्निशं हृदि ॥ ५८॥
रहस्यमेतच्छ्रुतिसारसंग्रहं, मया विनिश्चित्य तवोदितं प्रिय !
यस्त्वेतदालोचयतीह बुद्धिमान्, स मुच्यते पातकराशिभिः क्षणात् ॥ ५९॥
भ्रातर्यदीदं परिदृश्यते जगन्—मायैव सर्वं परिहृत्य चेतसा ।
मद्भावनाभावितशुद्धमानसः, सुखी भवाऽऽनन्दमयो निरामयः ॥ ६०॥
यः सेवते मामगुणं गुणात्परं, हृदा कदा वा यदि वा गुणात्मकम् ।
सोऽहं स्वपादाञ्चितरेणुभिः स्पृशन्, पुनाति लोकत्रितयं यथा रविः ॥ ६१॥

विज्ञानमेतदखिलं श्रुतिसारमेकं,
वेदान्तवेद्यचरणेन मयैव गीतम् ।
यः श्रद्धया परिपठेद् गुरुभक्तियुक्तो,
मद्रूपमेति यदि मद्वचनेषु भक्तिः ॥ ६२॥

॥ इति श्रीमदध्यात्मरामायणोक्तोत्तरकाण्डान्तर्गता रामगीता सम्पूर्णा ॥
॥ श्रीरामचन्द्रार्पणमस्तु ॥

यावन्न पश्येदखिलं मदात्मकं, तावन्मदाराधनतत्परो भवेत् ।
श्रद्धालुरत्यूर्जितभक्तिलक्षणो, यस्तस्य दृश्योऽहमहर्निशं हृदि ॥ ५८॥
रहस्यमेतच्छ्रुतिसारसंग्रहं, मया विनिश्चित्य तवोदितं प्रिय !
यस्त्वेतदालोचयतीह बुद्धिमान्, स मुच्यते पातकराशिभिः क्षणात् ॥ ५९॥
भ्रातर्यदीदं परिदृश्यते जगन्–मायैव सर्वं परिहृत्य चेतसा ।
मद्भावनाभावितशुद्धमानसः, सुखी भवाऽऽनन्दमयो निरामयः ॥ ६०॥
यः सेवते मामगुणं गुणात्परं, हृदा कदा वा यदि वा गुणात्मकम् ।
सोऽहं स्वपादाञ्चितरेणुभिः स्पृशन्, पुनाति लोकत्रितयं यथा रविः ॥ ६१॥

विज्ञानमेतदखिलं श्रुतिसारमेकं,
वेदान्तवेद्यचरणेन मयैव गीतम् ।
यः श्रद्धया परिपठेद् गुरुभक्तियुक्तो,
मद्रूपमेति यदि मद्वचनेषु भक्तिः ॥ ६२॥

॥ इति श्रीमदध्यात्मरामायणोक्तोत्तरकाण्डान्तर्गता रामगीता सम्पूर्णा ॥

॥ श्रीरामचन्द्रार्पणमस्तु ॥